वरेषुधिमते तुभ्यं नमस्तीक्ष्णेषवे हर ।
नम आयुधिने तुभ्यं स्वायुधाय नमो नमः ।। 87

सुधन्वने नमस्तुभ्यं स्तुत्यपथ्याय ते नमः ।
नमः काट्याय नीप्याय नमः सूद्याय ते नमः ।। 88

रजस्याय च नाद्याय वैशन्ताय नमो नमः ।
अवट्याय च कूप्याय वर्ष्ण्य वर्ष्याय ते नमः ।। 89

आशवेचाजिरायाथ शीघ्र्य शीभ्याय ते नमः ।
प्रतिसूर्याय स्वल्पाय नमः श्लोक्याय ते नमः ।। 90

अवसान्याय च नमो वन्यकक्ष्याय ते नमः ।
श्रवप्रतिश्रवायाथ आशवे चाजिराय च ।। 91

नमः शीघ्र्याय शीभ्याय उर्वर्याय च ते नमः ।
स्रोतस्याय च द्वीप्याय कनिष्ठज्येष्ठकाय ते ।। 92

पूर्वापरभवायाथ मध्यमाय नमो नमः ।
अपगल्भाय बुध्न्याय सौम्ययाम्याय ते नमः ।। 93

प्रतिसर्याय च खल्याय क्षेम्याय च नमो नमः ।
नमः सोमाय रुद्राय ताम्राय अरुणाय च ।। 94

नमः शङ्गाय शान्ताय पशूनां पतये नमः ।
नम उग्राय भीमाय नमो अग्रे वधाय च ।। 95

नमो दूरेवधायाथ हन्त्रे तुभ्यं हनीयसे ।
साराय प्रणवायाथ शम्भवे च मयोभुवे ।। 96

नमस्ते शङ्करायाथ नमो मयस्कराय च ।
नमः शिवाय शान्ताय नमः शिवतराय च ।। 97

नमस्तीर्थ्याय कूल्याय पार्यवार्याय ते नमः ।
नमः प्रतरणायाथ नमश्चोत्तरणाय च ।। 98

आतार्याय च लाद्याय नमः फेन्याय ते नमः ।
सिकत्याय प्रवाह्याय हिरण्यप्रपथाय च ।। 99

नमः किग्ं शिलायाथ क्षयणाय कपर्दिने ।
नमो गोष्ठ्याय गृह्याय पुलस्त्याय नमोऽस्तु ते ।। 100

निवेष्प्याय नमस्तुभ्यं पागंसव्याय ते नमः ।
नमः शुष्काय देवाय हरित्याय नमो नमः ।। 101

नमो लोप्याय उलप्याय उर्व्यसूर्म्याय ते नमः ।
पर्णाय पर्णशद्याय गुरमाणाय ते नमः ।। 102

नमो अभिघ्नते तुभ्यं नम अखितते नमः ।
नमः प्रिखिद्यते तुभ्यं किरिकेभ्यो नमो नमः ।। 103

देवानां हृदयेभ्यस्ते विक्षीणेभ्यो नो नमः ।
नमो विचिन्वत्केभ्यस्ते आमीवत्केभ्य एव च ।। 104

द्रापेकवचयुक्ताय अन्धसस्पतये नमः ।
दारिद्र्यदारिणे तुभ्यं नमस्ते नीललोहित ।। 105

नमस्ते नवसे तुभ्यं क्षयद्वीराय ते नमः ।
नमसा त्वां विधेमाद्य शिवां तां तनुवं शिव ।। 106

घोरा शान्ता तनुस्तेऽद्य प्रपद्ये तनुवौ शिव ।
घोरा तेऽद्य तनुर्वह्निःसर्वयज्ञेषु पूज्यते ।। 107

नमस्कारेण तन्वं ते प्रयामि शरणं हर ।
रुद्रो वा एव यत्रापि यर्जुर्भिः प्रवदाम्यहम् ।। 108

अहं प्रतिपदैर्मन्त्रैस्तद्रूपान् रुद्रसत्तमान् ।
नमस्करोमि तद्भक्तान् पृथिव्यप्सु सदोगणान् ।। 109

दिव्यन्तरिक्षतीर्थस्थान् वातवर्षशरानहम् ।
अभक्तान् देवदेस्य रुद्र जम्भे दद्याम्यहम् ।। 110

यो रुद्रो अग्निमध्यस्थो यो अप्स्वोषधिस्थितः ।
यो रुद्रो विश्वमध्यस्थरस्तस्मै सर्वात्मने नमः ।। 111

हिरण्य बाहुर्देवो यो हिरण्यतनुरीश्वरः ।
अम्बिकायाः पतिं शम्भुरुमायाः पतिरीश्वरः ।। 112

यज्ञेषु तद्धविःशेषं शिवलिङ्गे पुरःस्थितम् ।
तदश्याम तवाद्यैव यन्निवेदितमीश्वरे ।। 113

स्तनन्धयं महान्तं मे गावोऽश्वाः पुरुषा मम ।
मा वधीस्तं महादेव मां पाहि तनुवो मम ।। 114

कृत्तिं वासनो हस्ते त्वं बिभ्राणं च धनुर्वरम् ।
आगच्छ देव देवेश शरणं मामव प्रभो ।। 115

नमस्ते हर देवेश रोचिषे शोचिषे नमः ।
यत्र त्वं वससीशानो नमो यत्र निषीदसि ।। 116

तस्यार्द्राप्रार्थितं ऋक्षं श्रेष्ठोऽयं च गवां पतिः ।
नमसा तं प्रपन्नोऽस्मि सर्वदा शिवमेव हि ।। 117

तमेव यजत क्षिप्रं हे देवा दक्षसंयुताः ।
प्रसादयध्वं देवेशं हविषाम स्वसत्तमे ।। 118

यद्यसत्यं मयोक्तं चेन्मम मूर्धा पतिष्यति ।
ये न शृण्वन्ति मे वाचं तेषां मूर्धाद्य सम्पतेत् ।। 119

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते
इत्युक्त्वा संस्थितस्तूष्णीं यजुर्वेदः सुराग्रतः ।। 120

**सूत उवाच -**

प्रशंसामि सामिप्रभाधामशोभि-
प्रशस्तैकमस्तं सदा शूलहस्तम् ।
विशस्तान्धकारं महस्तं (?) सुहेम-
प्रतीकाशवामार्धरामं भजे हि ।। 121

।। इति श्रीशिवरहस्ये द्वादशाम्शे
ऋग्वेदयजुर्वेदस्तुतिर्नाम
तृतीयोऽध्यायः ।।



## ।। चतुर्थोऽध्यायः ।।

**सत्युवाच -**

शृण्वन्तु ब्रह्मविष्ण्वाद्या मुनयो दक्षसंयुताः ।
सामवेदो वदत्वेष परमार्थतया वचः ।। 1

**स्कन्द उवाच -**

तदा सत्या वचः श्रुत्वा सामवेदोऽब्रवीत्तदा ।
मौलिबद्धाञ्जलिपुट उत्थाय सुरसन्निधौ ।। 2

**सामवेद उवाच -**

अग्निरूपो महादेवो मामायातु स वीतये ।
हव्यदातारमीशानं हव्यभोक्तारमीश्वरम् ।। 3

गृभ्णामि वचसा साम्ना मनसैव महेश्वरम् ।
सवितुर्भासकं तेजो भर्गमेवमुपास्महे ।। 4

स धियो सर्वजन्तूनां यो वः समयक्प्रचोदयात् ।
भूर्भुवःस्वस्तथा सत्यं स एव परमेश्वरः ।। 5

तद्वो गायामि देवेशं पुरुषं परमेश्वरम् ।
आवोराजानमेवेशमध्वरस्य महेश्वरम् ।। 6

होतारं सत्यजं देवं रोदस्योरीश्वरं परम् ।
अग्निमेवं विरूपाक्षं मरणात्पूर्वमीश्वरम् ।। 7

हिरण्यरूपं देवेशं वृणुध्वमवशं सुराः ।
अर्थपतिर्मित्रपतिः शिवः क्षेत्रपतिः सुराः ।। 8

शिवो धनपतिः शम्भुः सुवः पतिरपीश्वरः ।
नमस्तस्मै महेशाय नमस्तस्मै कपर्दिने ।। 9

त्रयम्बकाय नमस्तस्मै क्रव्येभ्यश्च नमो नमः ।
अन्नाय च नमो नित्यमन्नाधिपतये नमः ।। 10

संवृते विवृते चैव प्रत्यश्राव्ये नमो नमः ।
क्रव्येभ्यश्च विरीकेभ्यो मृडाय च नमो नमः ।। 11

मयि मन्युं क्षमस्वेश दोहं गायामि शङ्कर ।
त्वामर्चयामि विश्वेशं परमात्मानमीश्वरम् ।। 12

यदिदं विश्वभूतं च त्वय्येव लयमेष्यति ।
नमो नमस्ते देवाय नमस्तेऽस्तु सदा मम ।। 13

चन्द्ररूपाय च नमः शुक्ररूपाय ते नमः ।
मखाय च नमस्तुभ्यं ओजसे ते नमो नमः ।। 14

सहसे ते नमस्तुभ्यं ऋतवे ते नमो नमः ।
बृहते ते नमस्तुभ्यं सुखाय च नमो नमः ।। 15

ज्योतिषे ते नमस्तुभ्यं त्वां दधे हृदये सदा ।
एभिर्नामभिरेवेशं स्तोभैर्गायामि शङ्कर ।। 16

औष्णैरित्वा महादेवं हवामि परमेश्वरम् ।
ओं वाग्भा तव देवेश सर्वभासकरी प्रभो ।। 17

सोमोऽयं जनिता देवः पवते शङ्करः स्वयम् ।
सोमोऽयं जनिता देवो मतीनां परमेश्वरः ।। 18

सोमोऽयं जनिता देवो दिवः शङ्कर ईश्वरः ।
सोमोऽयं जनिता देवः पृथिव्याः परमेश्वरः ।। 19

सोमोऽयं जनिता देवो अग्नेः साक्षान्महेश्वरः ।
सोमोऽयं जनिता देवः सूर्यस्य भव ईश्वरः ।। 20

सोमोऽयं जनिता देवो विष्णोश्चापि त्रियम्बकः ।
एषोऽन्तरा महादेव आदित्ये श्रूयते विभुः ।। 21

हिरण्यश्मश्रुरीशानो हिरण्मयसुकेशवान् ।
सर्व एव सुवर्णोऽयं शिवो ह्याप्रणखात्सुराः ।। 22

सीमा भूमा महानात्मा विश्वरूपो महेश्वरः ।
कं खं ब्रह्मेश्वरो ह्येष महादेवः प्रकाशते ।। 23

वैश्वानरात्मा त्रिमधुस्त्रिसुपर्णोह्यतीन्द्रियः ।
अपावृतं च तद्द्वारं सदा पश्यन्ति सूरयः ।। 24

विराट् स्वराट् तथा सम्राट् भगवान् रुद्र एव हि ।
युजोत्वात्यादयो वाचं गायेत्त्वाशतवर्तनम् ।। 25

महेन्द्रात्मा वामदेव्यो ज्येष्ठेराजानहिं कृतः ।
वैरूप वैश्वरूपात्मा सर्वात्मा परमेश्वरः ।। 26

महावैराज सुप्रीतो वैश्वामित्रस्तुतः शिवः ।
अष्टदंष्ट्रारवप्रीत एक एव महेश्वरः ।। 27

यजध्वं श्रीमहादेवं लभध्वं मुक्तिमुत्तमाम् ।
सत्यं मद्वचनं देवा महादेवोऽस्य भागभुक् ।। 28

प्रयात शरणं देवाः सदक्षा यूयमीश्वरम् ।
सत्यं सत्यं पुनः सत्यमुद्धृत भुजमुच्यते ।। 29

**सूत उवाच -**

इत्युक्त्वा मौनमातिष्ठत्सामवेदस्तदा मुदा ।
सहस्रशाखो द्युतिमान् शिवप्रियकरः सदा ।। 30

**सत्युवाच -**

वद त्वमप्यथर्वाणवेद सत्यं वदाधुना ।
शृण्वतां सर्व देवानां यत्ते हृद्गतमादरात् ।। 31

स सत्या वचनं श्रुत्वा वेदोऽथर्वाऽब्रवीत्तदा ।
मौलिबद्धाञ्जलिपुटस्तदा तत्र मनीषितम् ।। 32

**अथर्ववेद उवाच -**

योवै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः । 33

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ,, | या चोमा ,, | ,, | ,, | 34 |
| ,, | ,, | ,, | यश्च विनायकस्तस्मै | ,, | ,, | 35 |
| ,, | ,, | ,, | यश्च स्कन्दस्तस्मै | ,, | ,, | 36 |
| ,, | ,, | ,, | यश्चेन्द्रस्तस्मै | ,, | ,, | 37 |
| ,, | ,, | ,, | यश्चाग्निस्तस्मै | ,, | ,, | 38 |
| ,, | ,, | ,, | यश्च वायुस्तस्मै | ,, | ,, | 39 |
| ,, | ,, | ,, | यश्च वरुणस्तस्मै | ,, | ,, | 40 |
| ,, | ,, | ,, | यश्च यमस्तस्मै | ,, | ,, | 41 |
| ,, | ,, | ,, | यश्चनिर्ऋतिस्तस्मै | ,, | ,, | 42 |

यो वै रुद्रः स भगवान् यश्च कुबेरस्तस्मै वै नमो नमः ।43

| | | | | | |
|---|---|---|---|---|---|
| ,, | ,, | ,, | यश्च सूर्यस्तस्मै | ,, ,, | 44 |
| ,, | ,, | ,, | यश्च सोमस्तस्मै | ,, ,, | 45 |
| ,, | ,, | ,, | यानि च नक्षत्राणि | ,, ,, | 46 |
| ,, | ,, | ,, | ये चाष्टौ ग्रहास्तस्मै | ,, ,, | 47 |
| ,, | ,, | ,, | ये च ऋषयस्तस्मै | ,, ,, | 48 |
| ,, | ,, | ,, | येचाष्टौ वसवस्तस्मै | ,, ,, | 49 |
| ,, | ,, | ,, | येद्वादशादित्यास्तस्मै | ,, ,, | 50 |
| ,, | ,, | ,, | य एकादशरुद्रास्तस्मै | ,, ,, | 51 |
| ,, | ,, | ,, | या च पृथिवी तस्मै | ,, ,, | 52 |
| ,, | ,, | ,, | यच्च तेजस्तस्मै | ,, ,, | 53 |
| ,, | ,, | ,, | यच्चाकाशं तस्मै | ,, ,, | 54 |
| ,, | ,, | ,, | याच भूस्तस्मै | ,, ,, | 55 |
| ,, | ,, | ,, | या च भुवस्तस्मै | ,, ,, | 56 |
| ,, | ,, | ,, | यश्च सुवस्तस्मै | ,, ,, | 57 |
| ,, | ,, | ,, | यश्च महस्तस्मै | ,, ,, | 58 |
| ,, | ,, | ,, | यश्च जनस्तस्मै | ,, ,, | 59 |
| ,, | ,, | ,, | यच्च तपस्तस्मै | ,, ,, | 60 |
| ,, | ,, | ,, | यच्च सत्यं तस्मै | ,, ,, | 61 |
| ,, | ,, | ,, | ये च प्राणास्तस्मै | ,, ,, | 62 |
| ,, | ,, | ,, | यच्च मनस्तस्मै | ,, ,, | 63 |
| ,, | ,, | ,, | यश्च सर्वेन्द्रियाणि | ,, ,, | 64 |

यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमो नमः । 65

,, ,, ,, यश्च मृत्युस्तस्मै ,, ,, 66

,, ,, ,, यच्च भूतं भविष्यत् ,, ,, 67

ओमादौ च तथान्ते च भूर्भुवः स्वस्त्रिरीरितः ।। 68

बह्मैकं त्वं त्रिधोर्ध्वं त्वं गतिः पुष्टिर्महेश्वरः ।
विश्वविश्वं च विश्वातीतस्त्वं हुतं प्रहुतमेव च ।। 69

कृतं चाकृतमेतच्च परमं च परायणम् ।। 70

नारायणादिजनको ह्यर्यम्णो वरुणस्य च ।
जनिता त्वं तथा वायोर्द्यावाभूम्योर्महेश्वर ।। 71

सर्वेशः सर्वसाक्षी च सर्व एव त्वमेव हि ।
अग्राह्यः सर्वभूतेषु सर्वेन्द्रियगुणातिगः ।। 72

अलिङ्गोऽस्य शरीरस्त्वं व्यापकश्च सनातनः ।
वामनं त्वां महादेवं सर्वदेवा उपासते ।। 73

त्वत्तो जातं जगच्छम्भो स्थितं त्वय्येव लीयते ।
त्वत्तो नास्ति पृथक् किञ्चित् न भिन्नं परमार्थतः ।। 74

नेह नानास्ति किञ्चिद्वै त्वदधिष्ठितमेव हि ।
त्वामविज्ञाय दुर्मेधाः कृतकृत्योऽभिमन्यते ।। 75

सर्वभूताधिकश्चात्मा कोशातीतो महेश्वरः ।
महाग्रासः स एवेशो ब्रह्क्षत्रं तदोदनम् ।। 76

कालकालस्य देवस्य मृत्योरेवोपसेचनम् ।
ब्रह्मपुच्छं प्रतिष्ठा च शान्तिरक्षरमेव च ।। 77

हृदयं पुरुषो रुद्रस्तिस्त्रो मात्राः परस्तु सः ।
ओङ्कारप्रणवो व्यापी अनन्तो व्यापको विभुः ।। 78

तारं सूक्ष्मं वैद्युतं च शुक्लं सर्वशरीरगः ।
ईशानो भगवान् रुद्रो महादेवः स एव हि ।। 79

परं ब्रह्म परं धाम परः पारः परायणः ।
विशोको निर्गुणश्चायं महात्मा विश्वतोमुखः ।। 80

सर्वान्तरः सर्वसाक्षी एष रुद्रो महेश्वरः ।
स एव कर्ता जगतां नान्यो विष्ण्वादयः सुराः ।। 81

न च ब्रह्मा न चैवेन्द्रो नाग्निसूर्यानिलाःसुराः ।
यस्य शक्तिर्विचित्रास्य जगतः कारणं हरः ।। 82

हिरण्यगर्भः पुरुषो जायमानं स पश्यत ।
यस्माद्विष्णुः समुत्पन्नो रुद्रस्तस्मादजायत ।। 83

यतो ब्रह्मेशविष्ण्विन्द्राः सहभूतैः प्रजज्ञिरे ।
यदा चर्मवदाकाशं वेष्टयिष्यथ हे सुराः ।। 84

तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति (!)
यदा तमस्तु न दिवा नैवरात्रिर्महेश्वरः ।। 85

न सन्नचासत्स शिवः एक एव हि केवलः ।
विश्वस्मादुत्तरो देवः सहि विश्वाधिकः शिवः ।। 86

तस्य स्वरूपमस्माभिर्वक्तुं द्रष्टुं न शक्यते ।
सर्वतो मायया तस्य प्रतिकल्यं सुरासुराः ।। 87

मुह्यन्ति तत्प्रसादेन विमुक्ताश्च भविष्यथ ।
भजध्वं हयमेधेन हे सुरा वृषभध्वजम् ।। 88

सर्वमन्यत्परित्यज्य शिव एव शिवङ्करः ।
ध्येयः पूज्यो नमस्यश्च ईड्यः स परमेश्वरः ।। 89

समाप्तं मे वचोजालं सत्यं सत्यं न चान्यथा ।
एक एव हि विश्वात्मा भगवान् रुद्रएव हि ।। 90

सर्वेषां पतिरीशानः यूयं हि पशवः स्मृताः ।
तन्मायापाशबन्धात्स मोचयिष्यति वै सुराः ।। 91

तमेव शरणं यात क्षिप्रमद्यैव सत्तमाः ।
प्रसादयध्वं वरदं महादेवं सतीपतिम् ।। 92

एक एव महारुद्रः सर्वैः पूज्यो न संसयः ।
अस्मिन्नर्थे सुरश्रेष्ठाः सन्तप्तपरशुं धरे ।। 93

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।

**स्कन्द उवाच -**

इत्युक्त्वाऽथर्वणो वेदस्तूष्णीमास तदा मुदा ।। 94

तत्र देवैः स दक्षोऽपि मुनिभिः संस्थितःपुरः ।
अधोमुखोऽश्रुवदनो विष्णुमीक्षन्मुहुर्मुहुः ।। 95

**स्कन्द उवाच -**

एवं ते वेदवाचा मुनिगणसुरता मूकभावं प्रपन्ना
सन्ना दुःखातिभारैरतुलनतिहितप्राज्यवाचाममीषाम् ।
तत्रैवामिषलोलुपा इव झषाः पूषादयः संस्थिताः-
नोचुः किञ्चन कञ्चनापि बिबुधास्ते वञ्चनामास्थिताः ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
सामवेदाथर्ववेदकृतस्तुतिर्नाम
चतुर्थोऽध्यायः ।।



## ।। पञ्चमोऽध्यायः ।।

**श्रीसत्युवाच -**

चतुः साक्षिकमेवेदं शृणुध्वं वचनं सुराः ।
यजध्वं हयमेधेन लभध्वं मुक्तिमुत्तमाम् ।। 1

स्तुध्वमीशमथोक्तेन मखैर्यजत शङ्करम् ।
तं गायन्ति महादेवं सदा गायत्रिणोऽखिलाः ।। 2

अर्चन्ति बिल्वपत्राद्यैलिङ्गे देवं सनातनम् ।
सोमादिभिर्हविर्भिश्च सोमं यजत सत्वरम् ।। 3

ब्रह्मणस्पतिमीशानं मखाधीशं महेश्वरम् ।
त्रियम्बकं महादेवं सुगन्धिं पुष्टिवर्धनम् ।। 4

यजन्तु पुष्ट्यै भवतां तुष्टो भवति शङ्करः ।
नो चेद्रुष्टो भवेद्देवो भवत्सु सुरसत्तमाः ।। 5

शिपिविष्टेष्टमनसस्तुष्टा यूयं भविष्यथ ।
मायाऽहं प्रकृतिः साक्षात्तस्य देवस्य हे सुराः ।। 6

मन्मायामोहिता यूयं न जानथ महेश्वरम् ।
अहं वः प्रीतिकृन्माता पितासौ शङ्करः स्वयम् ।। 7

आवां सम्पूजितौ यत्र जगत्पूजितमेव तैः ।
यतो ब्रह्मेशष्ण्विन्द्रा जज्ञिरे देवसत्तमाः ।। 8

विष्णोर्जिष्णोस्तथा भूष्णोः प्रोक्तं यत्परमं पदम् ।
शिवप्रसादमात्रस्य साहाय्यं नैव कश्चन ।। 9

शिवक्रोधाग्निदग्धस्य सहायो नात्र कश्चन ।
यदि वेदाः प्रमाणं वो(वः)क्षिप्रं यजत शङ्करम् ।। 10

मा वः कालात्ययो भूयाद्धविषोऽत्र पिनाकिनः ।
यज स्विष्टकृता देवं शिपिविष्टं महेश्वरम् ।। 11

दुरिष्टं यद्दिने किञ्चित्स्विष्टं शिवकृपावशात् ।
स्विष्टमप्यत्र तद्धीनं दुष्टं भवति दूषितम् ।। 12

तस्माद्विंशिष्टं सर्वेषां शिपिविष्टं यजन्तु वः ।
शिष्टास्तेन भवन्त्यत्र विशिष्टाः शिवसम्मताः ।। 13

नोचेन्नष्टो भवेद्यज्ञः श्रेष्ठोऽप्यत्र हि दीक्षितः ।
तद्दीक्षणाग्निदग्धोऽयं दक्षः क्षिप्रं भविष्यति ।। 14

मुग्धा यूयं विदग्धाङ्गास्तत्फालानलकीलतः ।
भविष्यथ सुरश्रेष्ठा मा च वो विपदोऽत्र हि ।। 15

भक्त्यैव पूजितः साम्बः सतां संसारनाशकृत् ।
अद्याराध्य महादेवं विमुक्ता भवबन्धनात् ।। 16

अगस्त्यभृगुधौम्याद्या मार्कण्डेय दधीचिकाः ।
सुरासुराश्च मुनयो मुनयोऽमी तपस्विनः ।। 17

भस्मरुद्राक्षसहिता न वदन्ति किमुत्तरम् ।
शिवलिङ्गार्चनरताः शिष्टा यज्ञे महेश्वरम् ।। 18

भवभक्ता महात्मानस्ते वदन्त्यत्र साम्प्रतम् ।
यत्र स्थिताः सदा सभ्याः ईभ्या अपि च सा सभा ।। 19

सर्वेऽद्य मुनयो यूयं दक्षमुन्मार्गवर्तिनम् ।
याजयन्ति कथं मोहाद्भवन्तोऽथार्थलिप्सया ।। 20

अथाप्ययाजकानां तु पापमन्ते महद्भवेत् ।
वार्यतां वार्यतां दक्षो दीक्षितोऽप्ययमुत्पथः ।। 21

उन्मार्गवर्तिनं गूढं तारयन्ति कृपालवः ।
अत्रास्य ऋत्विजो भूत्वा यूयमस्पृश्यतां गताः ।। 22

समानसुखदुःखाश्च भवन्तस्तेन सत्तमाः ।
अनेन मा विनश्यन्तु वार्यतामयमुद्यताः ।। 23

**स्कन्द उवाच -**

इत्थं सत्या वचः श्रुत्वा मुनयश्चर्त्विजस्तदा ।
ऊचुस्ते म्लानवदना दक्षमेव प्रजापतिम् ।। 24

**ऋत्विज ऊचुः -**

वेदानां वचनं दक्ष प्रमाणं चात्र सत्तम ।
सर्वभोगभुगीशानः प्रभुः प्रीणाति विश्वभुक् ।। 25

यजस्वेशं सदादेवं महादेवं सहामरैः ।
पुरा त्रिपुरनाशार्थं भागो दत्तो महेश्वरे ।। 26

तमेवोपसदा देवं यज दक्ष सुखी भव ।

**सूत उवाच -**

ऋत्विग्वाचं तदा श्रुत्वा दक्षो दृष्ट्वा क्रुधैव तान् ।। 27

निर्दहन्निव चक्षुर्भ्यां वाचमूचे द्विजांस्तदा ।

**दक्ष उवाच -**

नाहमौपसदा त्र्यक्षं सदा भिक्षाटने रतम् ।। 28

यजामि विष्णुमेवाहं स्विष्टकृद्भागिनं च तम् ।
करोमि वेदवचनं समुल्लङ्घ्य क्रुधाग्निना ।। 29

विष्णुरेष सदा पूज्यः सतां गतिरियं मम ।
हित्वैनममरश्रेष्ठं न रुद्रो भागमर्हति ।। 30

इति तद्वचनं श्रुत्वा दधीचिः क्रोधवह्निना ।
ज्वलन्निव तदा तस्थौ यथा प्राज्याज्यतर्पितः ।। 31

ज्वलच्छिखो यथा वह्निस्तथा मध्यसभं मुनिः ।
प्राह दक्षं पुरस्कृत्य सुराणामुपशृण्वताम् ।। 32

**दधीचिरुवाच -**

ब्रह्मणो मानसः पुत्रो दक्ष दक्षोऽसि दीक्षितः ।
कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।। 33

देवदेवं विरूपाक्षं यज्ञेशं परमेश्वरम् ।
कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।। 34

विश्वतश्चक्षुषं देवं विश्वतो मुखमीश्वरम् ।
कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।। 35

विश्वाधिकं महादेवं विष्णुब्रह्मादिनायकम् ।
कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।। 36

विश्वजातेषु पशुषु स कथं पशुपो भवेत् ।
कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।। 37

यन्मायामोहिताः सर्वे विष्णुब्रह्मादयः सुराः ।
भवानपि महादेवं किं न जानासि शङ्करम् ।। 38

कस्मान्न यजसे रुद्रं साक्षादध्वरनायकम् ।
ब्रह्मणोऽस्य शिरश्छिन्नं महेशेन पिनाकिना ।। 39

ब्रह्मणेऽस्मै ददौ शम्भुश्चक्रं दैत्यविनाशकृत् (?)
विष्णवेऽस्मै महालक्ष्मीं भार्यात्वेन ददौ हरः ।। 40

वैकुण्ठस्याधिपत्यं च नीलकण्ठो ददौ पुरा ।
गर्वोद्रिक्तो महविष्णुरभूल्लोकविनाशकृत् ।। 41

मत्स्यवाराहसिह्माद्यैर्देहैर्लोकापकारकः ।
संशिक्षितश्च बहुधा महादेवेन शूलिना ।। 42

तवायं कोपदग्धस्य महादेवो हि रक्षकः ।
को वाऽयं विष्णुरेवाद्य रक्षकस्ते कथं भवेत् ।। 43

मृगेन्द्रनखराघातं जम्बुकः किं सहिष्यति ।
यद्भक्तैर्धिक्कृतो विष्णुः सहलक्ष्म्याऽति कोपने ।। 44

शापास्त्रैर्दारितो विष्णुरस्त्रैः शिवगणैरपि ।
विष्णोः कपालं निर्भिद्य पपौ रक्तं स भैरवः ।। 45

विष्वक्सेनो गणोऽस्यैव विष्णोः सम्पश्यतः पुरः ।
ईषीका प्रोतलीक्षेव शूलप्रोतमथाकरोत् ।। 46

इन्द्रस्यास्य भुजस्तम्भो येनाकारि पिनाकिना ।
सवज्रः ससुरैः पूर्वं गुरुणेशः प्रसादितः ।। 47

तदा मुमोचैव हसन् महेशो भक्तवत्सलः ।
यमोऽयं निहतः पूर्वं शिवपादाग्रताडितः ।। 48

मृकण्डुतनयस्यास्य रक्षार्थं शूलपाणिना ।
वायुरोपोऽशितः पूर्वं तृणाग्रचलनेऽप्ययम् ।। 49

महादेवस्य पुरतो नादहत्तृणमप्ययम् ।
अग्निः शिखावलीढोऽयं यद्धविर्भक्षणेरितः ।। 50

चन्द्रोऽयं तव शापेन यक्ष्मरोगार्दितः पुरा ।
प्रसादितो महेशेन सुधाधामैकमौलिना ।। 51

सूर्योऽयं नेत्रपातृत्वमगच्छच्छङ्करस्य हि ।
कुबेरोऽप्ययमीशस्य प्रसादात्सख्यमाप्तवान् ।। 52

वरुणो जलरोगार्तो महेशेन प्रसादितः ।
वसवोऽपि महेशेन दयया सम्प्रसाधिनः ।। 53

तत्प्रसादाय कर्माणि कुर्वन्तिमुनयः सुराः ।
तस्य लिङ्गं सदाकालं पूजयन्ति सुरासुराः ।। 54

आदित्या मरुतः सर्वे शक्रेण सह भागिनः ।
चकार परमेशोऽयं प्रसादेन महेश्वरः ।। 55

तथान्ये मुनयः सिद्धा महेशेन प्रसादिताः ।
पशुभूतेषु युष्मासु कथं पशुपतिः शिवः ।। 56

गण्यते देवदेवोऽसौ महादेवः सनातनः ।
विश्वाधिको महारुद्रः पूजनीयस्त्वयेज्यया ।। 57

पूज्योऽयं देवदेवेशः सर्वेषां सर्वकर्मभिः ।
तस्य प्रसादेन तव सफलोऽस्तु मनोरथः ।। 58

तत्प्रसादेन सर्वस्य भुक्तिर्मुक्तिर्हि सिध्यतः ।
तस्मान्मा विपदः सन्तु शृणु मद्वचनं मुदा ।। 59

रुद्रक्रोधाग्निदग्धस्य तव नान्यत्परायणम् ।
न ब्रह्माऽयं नैव विष्णुः न चात्र(न्ये)सुरपुङ्गवाः ।। 60

प्रभविष्यन्ति साहाय्ये तव दक्ष मखेऽधुना ।
अपूज्यपूजनाद्दक्ष पूज्यानां चाप्यपूजनात् ।। 61

न ज्यायसी गतिर्विद्धि इज्यायां याज्य एव हि ।
भविष्यति मुनिश्रेष्ठैरित्युवाच दधीचकः ।। 62

**सूत उवाच -**

तद्दधीचिवचः श्रुत्वा दक्षः क्रुद्धोऽभ्यभाषत ।
संवीक्ष्य विष्णुब्रह्माणौ सुरानन्यान् सतीं तथा ।। 63

**दक्ष उवाच -**

किं मे रुद्रेण कर्तव्यमभव्येन पिनाकिना ।
इज्योऽयं विष्णुरेवात्र सुराः सर्वे ममाधुना ।। 64

गच्छ वा त्वं यथाजोषं न सदस्योऽसि मे रिपुः ।
तद्दक्षवचनं श्रुत्वा महर्षिः शाम्भवस्तदा ।। 65

सह शिष्यैस्तदोत्तस्थौ धून्वन्वासोऽब्रवीत्क्रुधा ।

**मुनिरुवाच -**

न यत्र पूज्यते रूद्रो भगवाञ्छङ्करो यदि ।। 66

तत्र यान्त्येव विपदःसम्पदो नैव सम्प्रति ।
ध्वस्तो भविष्यति मखो महादेवस्य मन्युना ।। 67

सर्वैः सुरासुरैः सार्धं देवैश्च मुनिभिः सह ।
विश्रुतश्रुतिवाक्यं च नैव ते रोचतेऽधुना ।। 68

दण्डोऽत्र सम्पतेदीशादहीशवरमन्युना ।
न विष्णुर्न विधातात्र रक्षकोऽस्ति तवात्र हि ।। 69

पश्यामि सिह्मस्य पुरः क्रोष्टृकाक्रोशनं वृथा ।
इत्युक्त्वा निर्गतस्तस्माद्यज्ञवाटात्तदा मुनिः ।। 70

वेदाः सप्रणवास्तस्माच्छन्दांसि मुनयस्तथा ।
शाम्भवेया मुनिश्रेष्ठा दुर्वासा जमदग्निकः ।। 71

शेपुर्दक्षं तदा तत्र दक्षं चाविनयोद्धतम् ।

**मुनय ऊचुः -**

नैवायं ते भवेन्मन्युः शिवमन्युः प्रदूषितः ।। 72

गच्छामोऽस्माद्यज्ञवाटात्क्षिप्रं दक्षो विनश्यतु ।
सहैव ब्रह्मविष्णुभ्यां सुरैरत्रैव भूसुरैः ।। 73

इत्युक्त्वा निर्गता तत्र शाम्भवा ये मुनीश्वराः ।
तत्र क्रुद्धा सती वाचंमवोचत्क्रोधवीक्षणैः ।। 74

सत्युवाच -

यदा न दित्ससे भागं न लिप्सा ते सुखे भवेत् ।
सहैभिरसुराकारैः सुरैर्नाशमवाप्नुयाः ।। 75

इत्युक्त्वा योगमास्थाय ददाहात्मतनुं सती ।
तदा ह्राहाकृतं तत्र सुरता विस्मिताऽभवत् ।। 76

विष्णुब्रह्मादयो दक्षो भयकम्पितविग्रहाः ।
ग्रहास्ते विग्रहं चक्रुर्ववुर्वाताः सशर्कराः ।। 77

ववृषुः शोणितं मेघा जगर्जुः क्रूरविद्युतः ।
अपतन्प्रालुठद्भूमिश्चेलुर्नद्यश्च सागराः ।। 78

एवमुद्भ्रान्तविभ्रान्ता अभवंस्तत्र संस्थिताः ।
दक्षोऽत्र शरणं विष्णुमयासीद्भयमोहितः ।। 79

सधूमाग्नय एवासन् सुरागन्धसमावृताः ।
सदा भयसमाविष्टाः काष्टा असन् सुरा द्विजाः ।। 80

अपशकुनं शकुनाः परिबभ्रमुः
वमरुद्धा रुधिरं मुखेन शब्दैः ।
अभवाय मखस्य दुर्दिनेऽस्मिन्
न बभौ चाप्यनलो विमुक्तकीलः ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे सतीदेहत्यागो नाम
पञ्चमोऽध्यायः ।।



## ।। षष्ठोऽध्यायः ।।

**स्कन्द उवाच -**

चारणानां च वदतामाश्चर्यं तन्नभःस्थले ।
देहत्यागं तथा सत्याः श्रुतिवाक्यं सविस्तरम् ।। 1

दक्षापमाननं चापि हृदापश्यन्महेश्वरः ।
महामन्युर्मन्युनैव ववृधेऽत्यन्तदुःखतः ।। 2

दक्षमन्युं तदा देवैर्हन्तुं चक्रे मतिंहरः ।
जटाजूटात्समुत्पाद्य जटामेकां महेश्वरः ।। 3

भूमौ सन्ताड्यामास स क्रोधान्धीकृतेक्षणः ।
तस्मात्तत्र जटापाताद्बभूवातीव मन्युमान् ।। 4

वीरभद्रो ज्वलत्क्रोधो द्ष्ट्राक्रूरास्ययुक् तदा ।
महागिरिप्रतीकाशवर्ष्मणा समदृश्यत ।। 5

वृत्तदंष्ट्राकरालास्यो जिह्वया *सृक्विणी लिहन् ।
तं श्मश्रुजटिलं वक्त्रं शूलहस्तं सभैरवम् ।। 6

करिवृत्तोरुशुण्डाभबाहुदण्डविराजितम् ।
मकुटेनार्कवर्णेन भास्वत्कुण्डलमण्डितम् ।। 7

हारकेयूरवलयैर्भूषितं किङ्किणीगणैः ।
कचाकचितमध्यस्थखड्गखेटधरं तदा ।। 8

सदम्बुजच्छटारक्तव्यावृत्तनयनो मुहुः ।
त्रिपुण्ड्रविलसत्फालः करालकरवालधृक् ।। 9

---

* सृक्किणी - सृक्विणी - The corner of the mouth.

सम्प्रणम्य महादेवमुवाच नतकन्धरः ।
भैरवो दारुणाकारो मृगेन्द्रसमविक्रमः ।। 10

अञ्जनाद्रिप्रतीकाशो भाविभासितदिङ्मुखः ।
घनगम्भीरनिर्घोषसमारवभरस्तदा ।। 11

**भैरव उवाच -**

देव देव महादेव कल्याणवरुणालय ।
मरुत्पारणहाराढयकन्धरानन्तविक्रम ।। 12

मामाज्ञापय देवेश किमत्र करवाणि ते ।
किं पिबाम्यम्बुधीन् सप्त तरङ्गावलिघूर्णितान् ।। 13

चूर्णितं किं गिरिव्रातं करोमि पदघाततः ।
किं ब्रह्माण्डं महापिण्डं करोम्यद्य चराचरैः ।। 14

भूचक्रमखिलं चात्र चित्रनेत्राग्निना दहन् ।
किं वा सुरासुरव्रातं पातयामि मृतं पुरः ।। 15

शीघ्रमाज्ञापयेदानीं मा विलम्बितुमर्हसि ।
तद्भैरवोरुरभसा वचसा परमेश्वरः ।। 16

विप्रयोगेण वै देव्या दुःसहेनैव सुव्रताः ।
तदा तीव्रतरं स्वाङ्गात्ससर्ज भुवि तर्जकान् ।। 17

सौम्यानथ गणश्रेष्ठानसौम्यान् शिवभावनान् ।
तुरङ्गवरमातङ्गसारङ्गास्यान् मनोहरान् ।। 18

काकोलूकबकाभास्यान् वृकभेकास्यकांस्तथा ।
भल्लूकसृमराभास्यान् चामरास्यांस्तथा गणान् ।। 19

शेषमाहिषवक्त्रांश्च खड्गगोमायुवक्त्रकान्
वृषभास्यान् रासभास्यान् इभास्यान् कोकिलास्यकान् ।
एवं गणगणं तत्र दृष्ट्वेशः पुरतः स्थितम् ।
कोटित्रयातिगणितं नानावेषैकभूषितम् ।। 20

रूषितं भसितेनैव घोषमाणं मुहुर्मुहुः ।
त्रिपुण्ड्रफालं रुद्राक्षफणिहारविभूषितम् ।। 21

असिकार्मुकनिस्त्रिंसखड्गखेटधरं तदा ।
बाणबाणासनधरं करवालसत्कटिम् ।। 22

कुन्तशातारिमुत्कृष्टं प्रणतं पुरतः स्थितम् ।
सास्त्राविलाक्षस्त्र्यक्षस्तान् मुहुरीक्षन्नुवाचह ।। 23

वीरभद्रं पुरस्कृत्य रुद्रकोटिसमन्वितम् ।

**ईश्वर उवाच -**

वीरभद्र सदाभद्र तवास्तु विजयो गणैः ।। 24

तूर्णं प्रयाहि दक्षस्य यज्ञवाटं सुरैर्वृतम् ।
विष्णुब्रह्मादिविबुधैः क्षणाद्विध्वंसयाधुना ।। 25

तेन मे प्रीतिरतुला मा ते विघ्नोऽत्र सम्प्रति ।
इत्युक्तोऽथ महेशेन वीरभद्रो गणैः सह ।। 26

मत्तवारणसङ्काशैर्ययौ गणगणैर्वृतः ।
नत्वा तं श्रीमहादेवं वीरभद्रो नदंस्तदा ।। 27

गणा जगर्जुश्च तदा भ्रामयन्तोऽस्त्रमण्डलम् ।
गणेश्वरकृतारावबधिरीकृतदिङ्मुखम् ।। 28

तन्मखं *लेखकैः सार्धं दुर्मुखं समपद्यत ।
तदा वाता ववुर्लोके तत्र वा भयशंसिनः ।। 29

पर्वताश्च व्यशीर्यन्त चकम्पे च वसुन्धरा ।
मारुतैश्चाप्यघूर्णन्त चुक्षुभे वरुणालयः ।। 30

अग्नयो नाप्यदीप्यन्त न च भाति प्रभाकरः ।
ग्रहाश्च न प्रकाशन्ते पेतुर्नक्षत्रपङ्क्तयः ।। 31

उल्का कबन्धसहिता पपात मखसंसदि ।
गणेश्वरैः समारुह्य रथं भद्रो गिरिप्रभम् ।। 32

सहस्राश्वं पताकाढ्यं कुम्भराजत्पताककम् ।
गणास्तमन्वयुस्तत्र विविधायुधपाणयः ।। 33

गर्जन्तश्चातिहृष्यन्तो भिन्दन्तो गां शरावरैः ।
शूलमूलैर्गिरिव्रातं घनुष्कोट्योत्सृजन्त्यपि ।। 34

हिमवच्छिखरे रम्ये हेमशृङ्गे सुशोभने ।
यज्ञवाटस्तदा तस्य गङ्गाद्वारे(र)समीपतः ।। 35

तं तत्क्षणात्प्रविश्यैव यज्ञवाटं गणेश्वरैः ।
रोमजैः सहितो भद्रैः कालाग्निरिव चापरः ।। 36

उवाच भद्रो भगवान् यज्ञवाटाद्बहिः स्थितः ।
सर्वामरैर्वृतं तत्र दक्षं विष्णुविधी तदा ।। 37

---

* लेखकैः, लेखैः =दैवैः ।

**वीरभद्र उवाच -**

दक्ष दक्षोऽसि नितरां सुरैः सह मुनीश्वरैः ।
एते च ब्रह्मविष्ण्वाद्या मोहिताः शिवमायया ।। 38

वाक्याद्देवस्य भागार्थं समायातस्त्वदन्तिकम् ।
सत्या वियोगदुःखेन भवस्यात्यन्तरोषतः ।। 39

दग्धुं वै प्रेषितश्चाहं भवता च *मुनीश्वरैः ।
क्व ते साहाय्यकृद्विष्णुर्निर्गच्छतु मया रणे ।। 40

शङ्कचक्रधरः शाङ्र्गी दैत्यसङ्घादिदर्पहा ।
इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः ।। 41

फालनेत्रानलज्वालाजालमालाभिरेव हि ।
गणा नर्दन्ति सोत्साहं दारयन्ति सुरान् मुनीन् ।। 42

त्रिशूलमूलनिर्भिन्ना निर्विण्णा बाष्पवारिभिः ।
सिञ्चन्ति स्वानि चाङ्गानि द्विजा देवाः सवासवाः ।। 43

धावन्ति कान्दिशीकास्ते विस्रस्तमुकुटाङ्गदाः ।
स्खलत्पदाः पतन्तश्च मुक्तकेशैकवाससः ।। 44

वसवश्चासुभिर्हीना पेतुः प्रेता इवात्र गाम् ।
कुबेरोऽथ विरूपोऽभूत् वरुणः शरणोज्झितः ।। 45

वायुराकाशयुक्तात्मा भास्करो निष्प्रभोऽभवत् ।
निरृतिर्धृतिहीनोऽभूत् आदित्या नित्यमानिनः ।। 46

---

* भवता मुनीश्वरैश्च साकम् ।

सोमो भयामययुतः पितरः कातरास्तथा ।
कृतान्तश्च भयोद्रेकसङ्क्रान्तः पूर्वखेदतः ।। 47

सुधन्वानो विधन्वानोह्यभया भयमोहिताः ।
निर्वीर्याश्चाभवन् सर्वे गन्धर्वा धैर्यवर्जिताः ।। 48

तर्जिता गणरावेण तत्रैवाप्सरसां गणाः ।
विस्रस्तकबराश्चैव विगलत्करकङ्कणाः ।। 49

धावन्ति विदिशं तत्र सिद्धविद्याधरादयः ।
किम्पूर्षा नागयक्षाश्च व्याकुलाक्षाः प्रदुद्रुवुः ।। 50

नागा नगाश्च भूनागा नद्यो विद्याधरास्तथा ।
हाहाकारकृतस्तत्र भ्रमन्ति परितो मुहुः ।। 51

द्रुमसीमा समूहेन शालां तां संस्थिता द्विजाः ।
विदग्धाश्चैव मुग्धाश्च शालादाहेन मोहिताः ।। 52

वडवानलसङ्काशो ज्वालामालानलैर्युतः ।
शाखाशिखाभिर्वह्नेश्च लेलिहानमभूज्जगत् ।। 53

धूमज्वालाऽवृतालोका अभवन् गन्धमेदुराः ।
मांसानि चैव भक्ष्याणि अन्नमुच्चावचं बहु ।। 54

रसवन्ति च पानानि सोमाज्यहविरादयः ।
वासांस्याभरणान्यत्र स ददाहोज्ज्वलच्छिखः ।। 55

गणेश्वराश्च सङ्क्रुद्धा यूपान्युत्पाट्य चिक्षिपुः ।
प्रस्तोत्रा सह नेत्रा च योक्त्रा नेष्ट्रा गणेश्वराः ।। 56

गङ्गास्रोतसि वेगेन पशुभिस्तानपातयन् ।
भाण्डानि यज्ञपात्राणि छिन्दन्ति गणपा मुदा ।। 57

भक्ष्याणि तत्र पेयानि पिबन्तो भक्षयन्ति च ।
धावन्ति परितस्तत्र अनुपृष्ठं सुरान् मुनीन् ।। 58

बिभिदुः शरवर्षेण हर्षेण महता गणाः ।
कुन्तशातान् सुरांस्तत्र क्रूरा आक्रोशकारिणः ।। 59

हा हा हेति वदन्त्यन्ये तातम्बेति वदन्ति ते ।
भ्रातर्हन्तेति सम्भ्रान्ता धावन्ति मुनयः सुराः ।। 60

गतदण्डाजिनाः सर्वे खण्डिता गणखड्गतः ।
चूर्णिताश्चाश्मभिः केचिन् घूर्णिताः प्रापतन् क्षितौ ।। 61

जटाश्चोत्पाट्य गणपानधश्चापातयन्मुनीन् ।
श्मश्रुभिश्च गणाश्चाष्टौ दन्तैर्निष्कासयन्त्यपि ।। 62

मुनीनां ऋत्विजां तत्र सदस्यानां तदा गणाः ।
हावयन्तं सोमवासं भृगुं ताड्य कपोलयोः ।। 63

पातयन्ति महीपृष्ठे निसृष्ठोष्ठमकुर्वत ।
वीरभद्रो महातेजा शक्रं नक्रवदास्थितम् ।। 64

ऐरावतेन धावन्तं पातयामास खड्गतः ।
आखण्डलकरं तत्र चापाकृष्टेषुभिस्तदा ।। 65

तिलशः खण्डयामासुः सम्पूर्याक्षीण्यपातयन् ।
मकुटेनापविद्धेन पतन्नुर्व्यां स वासवः ।। 66

लम्बमानो गजपदे कक्षासक्तपदोऽलुठत् ।
निस्त्रिंशेन हतस्तत्र वरुणो यादसां पतिः ।। 67

लुलायेनैव निहतो गणबाणैर्यमस्तदा ।
आर्यं चानर्मया वाचा अभयं समयाचत ।। 68

शरेणोच्चकिरे नेत्रे तस्य ते गणपुङ्गवाः ।
वीरभद्रो महातेजा मुष्ट्या शक्रमताडयत् ।। 69

भास्वन्नेत्रे चोत्पाट्य करजाग्रेण लीलया ।
निपात्य मुष्टिना दन्तान् पूष्णश्चाथ न्यपातयत् ।। 70

तदा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ।
शिरो यज्ञस्य स तदा चिछेद करवालतः ।। 71

वह्नेर्हस्तद्वयं छित्वा जिह्वाश्चोपाटयन् द्रुतम् ।
निर्गतासून् वसूंश्चेक्रे पादाहतिजघाततः ।। 72

विश्वेदेवाश्विनौ तत्र मरुतः पितरस्तथा ।
तेन सन्ताडिता पादाघाताच्चापि विधीर्णिताः ।। 73

यमं सदन्डं गमपः पादघातैरथाहनत् (रहन् तदा) ।
जघान तत्रचेशानं त्रिशूलेन महाबलम् ।। 74

पत्नीशालां ददाहास्य क्रोशन्तीनां गवामिव ।
दक्षपत्न्यास्तु कबरं करवालेन चाहरत् ।। 75

सरस्वतीं छिन्ननासां अकरोदसिधारया ।
क्षतजेनोक्षितास्तत्र देवराजाङ्गनागणाः ।। 76

विस्रस्तवामभरणा गलद्धम्मिल्लमल्लिकाः ।
सस्वेदाश्रुगलद्गन्धस्वाङ्गरागभयाकुलाः ।। 77

कुरर्य इव क्रोशन्त्यो धावन्ति सुरयोषितः ।
त्रयस्त्रिंशत्सुरानेवं तद्गणांश्च गणेश्वरः ।। 78

जघान भगवान् रुद्रः खड्गयष्ट्यसिसायकैः ।
गदापरिघनिस्त्रिंशैर्निर्दयं मर्दयन्गणैः ।। 79

एतस्मिंन्नन्तरे तत्र वीरभद्रं वचोऽब्रवीत् ।
याचमानश्च शरणं वृद्धभावात्पितामहः ।। 80

*रथस्थमपि सारथ्यं स्वयं कुर्वन्तमीक्ष्य वै ।

**ब्रह्मोवाचः -**

सारथिस्ते भवाम्यद्य वृद्धो नो योद्धुमुत्सहे ।। 81

सुराणां चरणे मेऽद्य पश्य मे रश्मिलाघवम् ।
पुरा त्रिपुरसंहारे शम्भोः सारथ्यकर्मणि ।। 82

न्ययुङ्क्त मां प्रसादेन भगवानगजापतिः ।
स्थापयन्मां रथस्याग्रे विजयायासुराहवे ।। 83

तं ब्रह्माणं गणश्रेष्ठः सारथ्ये समयोजयत् ।
तस्य रश्मीन्प्रजग्राह तदश्वांश्चाप्यचोदयत् ।। 84

---

* स्वं रथस्थं च सारथ्यं कारयन्तमवेक्ष्य वै । ब्रह्मा, स्वं सारथ्यं त्रिपुरासुरसंहारावसरे कारयन्तं स्वयं क्षितिरूपरथारूढं शिवं अवेक्ष्य वचोऽब्रवीत् ।

गतप्रत्यागतैश्चित्रैरपवाहनयोजनैः ।
सन्तुष्टमकरोद्वेधा वीरभद्रं सुराजिषु ।। 85

पक्षपातेन दक्षस्य दक्षं कृत्वाऽथ पृष्ठतः ।
तदृत्विजो मुनिगणान् प्राहतान् सुरसत्तमान् ।। 86

पुनर्योज्य सहस्राक्षं रथे मातलिचोदिते ।
वामदक्षिणभागस्थौ सहस्राक्षसुदक्षकौ ।। 87

निषङ्गकार्मुकधरौ वर्षन्तौ च शराञ्छितान् ।
मध्ये स्वयं रथोपस्थे समास्थाय ययौ हरिः ।। 88

देवानीकैश्च कोटीभिः संवृतो विविधायुधैः ।
निषङ्गिभिः कवचिभिर्गदाप्रासासिपाणिभिः ।। 89

शरासारं प्रमुञ्चन् वै शाङ्र्गं धुन्वन्हरिर्ययौ ।
प्राध्माप्य शङ्खान् भेरीश्च पटहाहतिनिः स्वनैः ।। 90

*वीरभद्रःप्रयाहीति माधवं चोदयद्विधिम् ।
गणैर्नानाप्रहरणैर्हेतिशूलहलायुधैः ।। 91

निषङ्गस्थसनागैश्च धनुर्बाणासिसायकैः ।
कुन्तैर्गदाभिर्मुसलैः पट्टिशैश्च परश्वथैः ।। 92

दध्मुर्मुरज भेरीश्च संवाद्यपटहानकान् ।
बृह्मितास्फोटनरवैः पताकाधूतनिःस्वनैः ।। 93

---

* प्रयाहि माधवं चेति भद्रो विधिमचोदयत् - इत्यर्थे ।

निष्कोशितासिविद्योतच्छतार्कमिव भास्करम् ।
आहर प्रहरस्वेति गणैः सुरगणारवैः ।। 94

धनूंषि कर्षतां तत्र शराणामाशु धन्विनाम् ।
कृतक्रेङ्कारसीत्कारैर्हयहेषरथस्वनैः ।। 95

भ्रमच्चक्राक्षसङ्कूजद्गदामुसलपातनैः ।
एवं युयोध भद्रोऽपि हरिणा दानवारिणा ।। 96

हरिः सुरगणैः सार्धं भद्रमेव ययौ तदा ।
तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ।। 97

सुराणामथ भीरूणां दारुणं मरणोपमम् ।
देवा गणैश्च युयुधुर्वस्वश्विमरुतोऽर्ककाः ।। 98

विश्वेदेवाश्च पितरः साध्या विद्याधरास्तथा ।
यक्षा दक्षैकपक्षस्थकुबेरवरुणादयः ।। 99

सुधन्वानोऽथ मरुतो धन्विनः सायकैस्तदा ।
विष्वकसेनादिगणपाः स्वगणैः कोटिभिर्वृताः ।। 100

शङ्खचक्रगदाहस्ता युयुधुः स्वायुधैस्तदा ।
गरुडोऽपि गणांस्तत्र विददार नखैः शितैः ।। 101

पक्षतुण्डप्रहारैश्च गणैःसुरगणैस्तदा ।
उद्यतायुधजालैश्च युयुधुर्वरसायकैः ।। 102

विष्णुः सायकसाहस्त्रैर्वीरभद्रं जघान ह ।
वीरभद्रोऽच्छिनद्बाणान् विष्णोस्तत्पश्यतां तदा ।। 103

त्रिभिः शरैस्तदा विष्णुं जघान गणपुङ्गवः ।
धनुर्ज्यां कवचं तत्र छित्वा चैवाप्यपातयत् ।। 104

नवत्या वीरभद्रं च शरैरानतपर्वभिः ।
सन्ताड्य मर्मसु हरिः शङ्खं प्राध्मापयत्तदा ।। 105

तुहुण्डहुण्डहेरण्डमण्डली बाष्कलिर्बलिः ।
एते गणेन्द्रा वस्वश्विमरुद्भिर्युयुधू रणे ।। 106

गदापरिघनिस्त्रिशैःशरैर्मर्मस्वताडयत् ।
गजा गजैर्हयैरश्वा रथस्था रथिभिः सह ।। 107

कशाङ्कुशाङ्गुष्ठसुपृष्ठतोदनै-
स्तोत्रैश्च योक्त्रैः सुखलीनचालनैः ।
करीन्द्रसङ्घृष्टकरेणुपुञ्ज-
प्रकीर्णतामाप रणावनिस्तदा ।। 108

धावद्रथाङ्गोत्थितरेणुरूषितैः
सुभूषणश्मश्रुभिरुद्धतासुराः ।
गणा विकोशीकृतखड्गखेट-
प्रहारधारासु पतन्ति भृङ्गवत् ।। 109

कोदण्डदण्डोद्भवबाणकृत्त-
वेतण्डशुण्डारदखण्डसंसृता ।
सुरोरुमुण्डाजकषण्डमण्डिता
तदा गणेन्द्रैः प्रबभौ रणावनिः ।। 110

तुरङ्गहेषैर्गजबृंहितारवैः
शताङ्गचक्रावृतनेमिनिःस्वनै ।
चलत्पताकावलिधूननैः सुरा
*भाङ्कारभेरीपटहाब्जनादैः ।। 111

तुरङ्गमातङ्गशताङ्गसङ्घै-
र्गणासिविद्योतितशस्त्रजालैः ।
समावृतं तत्तुमुलं विरेजे
सुरोरुकोलाहलजातसम्भ्रमम् ।। 112

लाङ्गलमुसलैस्त्रिशूलहस्तैः
सुरता जडतामवाप जन्ये ।
गर्जन्ति तत्रैव गणेन्द्रसङ्घाः
पर्जन्यनादेन हि तर्जयन्सुरान् ।। 113

तन्नादतस्तत्र गजा हया वृषा
उत्कर्षयन्तो मदमाशु सत्कटैः ।
निमीलिताक्षाश्च पदात्तशुण्डाः
प्रस्नुवुस्ते शकृदत्र मूत्रम् ।। 114

सुरसामान्यकजन्यसम्भ्रमे
भ्रमतीव प्रमदा बभूव सेना ।
कुन्तैःशकुन्तानिव ते गणेन्द्रा
निहन्तुमैच्छत्सुरवाहिनीं ताम् ।। 115

---

* अब्ज -शङ्ख

अहीनमन्योः सुमहोरुमन्यो-
राज्ञावशान्मन्युमहोऽसृजन् गणाः ।
ते शस्त्रलाघवकरैर्वरमण्डलाक्षि-
सङ्क्रामणे प्रतिहता धृतखेटपृष्ठैः ।। 116

अस्यन्त एव विसृजन्ति शरावरोधं
मेघा इवाद्रिशिखरे शरवृष्टिसृष्टिम् ।
अमोघमेघा इव शस्त्रवर्षै
र्गणा ववर्षुः सुरसङ्घसैन्ये ।
संपुध्य चायोघन भूमिमध्यगाः
पपुश्च पानानि वसासवानि ।। 117

तौ चाजिमीयतुरुभौ हरिवीरभद्रौ
रुद्रैः सुरार्भटभटैर्वरशस्त्रहस्तैः ।
खड्गप्रभानिकरतैलशिलासु धौत-
कूजत्सुपुङ्खसुमुखाः प्रबभुश्च लेखाः ।। 118

दक्षः सहस्राक्षरथेऽम्बुजाक्ष-
समन्वितस्तत्र शरैस्ततक्ष ।
शतं सहस्रायुतकोटिसङ्ख्यया
सपक्षयुक्तैः सुपृषत्कसङ्घैः ।। 119

स वीरभद्रोऽपि पिनाकिनिः सृतैः
शरोरुसारैर्निचकर्त तान् शरान् ।
दक्षं ललाटे त्रिभिराजघान
हरिं च जम्भारिमपि स्तनान्तरे ।। 120

चकर्ष चापं प्रववर्ष बाणान्
हर्षोरुतर्षैकहृदा स भद्रः ।
सुरोरुकुम्भ्युद्यतकुम्भमध्ये
हयोरुसत्सादिषु तद्रथेषु ।। 121

क्षिप्रं स वत्सप्रशरैः सुवत्स-
दन्तं समाकृष्य वृषं मुमोच ।
तस्यार्धचन्द्रेण धनुः शरावरं
चिच्छेद भद्रोऽपि हिरण्यदर्शनम् ।। 122

कचत्कवचमप्यधो न्यपतदाशुनाराचकैः
विदारितशिरोधरैर्मकुटकुण्डलाद्यावृतैः ।
सुरेन्द्रगणदारणैः सुरगणेषु साधारणैः
बभूव धरणी तदा भगणपातवत्स्वर्गतः ।। 123

गोधाङ्गुलित्रसुशिरस्त्र तनुत्रमत्र
दिव्यातपत्र निकरैर्विबभाति सा भूः ।। 124

तुरङ्गमातङ्गनरोत्तमाङ्गै
स्तस्तार विस्तारितशस्त्रवर्यैः ।
ते भिन्नमर्मदरिताश्च विवर्मिणोऽत्र
वैवर्ण्यमापुरमरा गणशस्त्रघातैः ।। 125

वर्माणि तत्र ससृपुः शरसृष्टिवृष्ट्या
मुष्ट्या च यष्टिभिरथ प्रहरन्ति जन्ये ।
पतन्ति धावन्ति पिबन्ति शोणितं
मुखस्रवं चोत्प्लुतिमाचरन्ति ।। 126

कूजन्ति हृष्यन्ति च नूतनव्रणैः
पानीयमानीयत इत्युदारम् ।
सा *वाजयुक्ता शरराजिराजौ
कूजन्त्यतन्तीव रराज तत्र ।। 127

आग्नेय वायव्यसुराख्यशस्त्रै
रस्त्रैर्ववर्षतुरुभौ हरिवीरभद्रौ ।
तस्यातपत्रध्वजवाजिरश्मि-
तत्सररथिं भद्रगणो ममन्थ(ममाथ) ।। 128

रथं तथाक्षं च सकूबरं रणे
चकर्त बाणैस्तिलशो गणेश्वरः ।
चक्रं च नक्राकृतिशक्रियुक्तं
त्रिविक्रमो विक्रमते रणाजिरे ।। 129

वक्रं च तच्चक्रमभून्निसृष्टं
हरेः करो भद्रगिरिप्रसङ्गके ।
सस्मार वेदाश्ववहं च भूरथं
महारथेशं किल वीरभद्रः ।। 130

स्विषुः सुधनवानमहो पिनाकिनं
नैवास्य भग्नो न रथो न कार्मुकम् ।
सुदर्शनं वा न चकर्त वै सुरो
द्रापि प्रभाभावित एष वीरः ।। 131

---

* वाज - The feather of an arrow.

*निषङ्गिणोऽस्य स्मृतिनोऽक्षयेषुधिः (?)
बभूव तस्येशकृपावशात्तदा ।
सुपर्वणां सन्नतपर्वभिः शरै-
रखर्वगर्वं प्रजहार गर्वहृत् ।। 132

कक्षोरुकुक्षिस्थितवह्निना समो
ददाह तत्राह्नि सुरोरुवाहिनीम् ।
गणोत्तमास्ते च सुतैलधौतै-
स्त्रिशूलघातैः परिघैर्गदाभिः ।। 133

निर्यत्सुमस्तिष्कसुशुक्ललोहितै
र्व्यसून् वसून् तत्र हतान् प्रचक्रुः ।
ते विश्वदेवाश्वरथेषु वाजिनो
निजघ्निरे तत्र गदाभिघातैः ।। 134

वायून्विनिर्यायिनरायुषस्तान्
प्रचक्रुरुच्चक्रसहस्रधारैः ।
तरणिं वरुणं तथैव वह्निं
यममाप्यानमयन् शरोरुवर्षैः ।। 135

रथसारथिवाजियोक्त्रछत्रा-
ण्यपजह्रुर्गणापा धनाधिपस्य ।
गहनं विविशुः सुरास्तु शम्भोः
स्वगणैरुज्झितवाहनास्त्रवेषाः ।। 136

---

* निषङ्गिणोऽस्य स्मरणादथेषुधिः इत्यर्थे ।

परिधावन्ति रणे भृशं व्रणाङ्काः
प्रपतन्तो द्रुतमुग्ररुद्रभीताः ।। 137

भग्नाक्षचक्रध्वकूबरै रथै-
र्हयोरुमातङ्गशवैः विभाति भूः ।
विनिष्कृतान्त्रोरुवसासृगश्रु-
दुर्गन्धबन्धानिलसङ्घमत्र ।। 138

ऊहुः कशाघात शिताङ्कुशाग्र-
सञ्चोदनैरश्वगजा रथाश्च ।
योधान् सुसन्नांश्च महोरुयुद्धे
मांसास्थ्यसृक्पूयवसादिपङ्के ।। 139

सुरेन्द्रसङ्घाश्च गणेन्द्रवृन्दं
विपाटनाराचशरैर्व्यपाटयन् ।
भल्लैः सुफुल्लैरिव किंशुकाभै
र्देहे ततक्षुः क्षतजार्द्रगात्राः ।। 140

प्रासासिहस्तान्मुसलैर्विशस्तान्
ध्वस्तान् चकाराशु गणेशवाहिनी ।
गदाभिभग्नोरुवलग्नमध्यमान्
नग्नान्प्रदुद्राव सुमानहर्षान् ।। 141

विशालवक्षः सुकवाटपाटनैः
स्कन्धे तथा कोमलकण्ठमूले ।
गणेश्वराश्चापशरासिपाणयो
यज्ञोपवीताकृति चिच्छिदुः सुरान् ।। 142

हसन्ति केचित्प्रवदन्ति केचि-
न्नृत्यन्ति तत्रैव कबन्धमुण्डाः ।
प्रासासिहस्ता विवृतान्त्रबन्धाः
सम्बन्धमीयुर्धरणीतलेषु ।। 143

पतत्समदकुञ्जरं वरहयोरुदेहाकुलं
सुकम्पितरसातलंस्खलदपारयोधावृतम् ।
सुगर्जितसुनिर्जरं गणकृतोरुसन्तर्जनं
बभूव ह रणाजिरं सुरगणौघरागादरम् ।। 144

जन्ये तदा तत्र सुशोणितापगाः
प्रसुस्रुवुश्छत्रकदम्बफेनाः ।
सचामराखण्डितफेनबुद्बुदा
नरान्त्रमस्तिष्कजकूर्ममीनाः ।। 145

दिवि स्वर्गलिप्सां बहु प्रार्थयन्तः ।
सुशस्त्रोरुधाराविगाढा धरण्याम् ।
वेतालकङ्कालबलादिहर्षदा
गृध्रेषु काकश्वगणे शिवासु ।। 146

भ्रमन्ति तत्रैव शुनां समूहा-
गृध्रभ्रमैस्तत्पिशुनालित्तदा ।। 147

भ्राम्यद्गृध्रगणोरुपक्षतिहताः संवीजितास्ते शवाः ।। 148

गजाश्वरथपङ्क्तिसन्निहतसादिसत्सारथिः
प्रतोदवरहस्ततो मृतनिरस्तशस्त्राङ्कुरैः ।
प्रकीर्णमणिभाण्डकैर्विवृत नेत्र जिह्वास्यकैः
प्रकीर्णमभवत्तदा रणतलं सुदुर्दर्शनम् ।। 149

कुथाङ्कुशपदाहतिप्रबलमांससम्पर्कत-
स्खलद्गणशरारवैर्मृतिमवापुरेवं सुराः ।
त्रिदशा विदशां दशामवापुरेवं
गणशस्त्रैर्निहताश्च कान्दिशीकाः ।। 150

तथेह गणपुङ्गवः शरवरोरुधारादिभिः
सुरासुरगणं व्यधात् भगणनाथचूडाज्ञया ।। 151

रटत्करटिगर्जनैर्हयवरोरुपातस्वनैः ।
बभूव धरणी तदा सकरुणारुणा शोणितैः ।
प्रभग्नरथचक्रकप्रशिथिलाक्षनेमिस्वनैः ।
रराज रणभूस्तदा गणगणोरुबाणैर्हता ।। 152

ध्वस्ताक्षसत्सारथिसत्पताका-
सुछत्रहीनान्निपपात माधवः ।
स्वकां स्त्रियं आलिलिङ्गिषु-
रभ्युत्थो दक्षयुतः स वासवः ।। 153

विहङ्गमं तं खगमं पुरःस्थितं
विष्णुः समारुह्य चकार लाघवम् ।
गोमायुमायेव स माययाऽस्त्रका-
ण्यवासृजत्तत्र गणेन्द्रदेहे ।। 154

विधौ मुधैवाथ स विष्णुराहवे
व्याधात्स्वकास्त्रैर्विनिवार्य तान् गणान् ।
प्राध्मापयच्छङ्खमदीनवीर्यो
धैर्यैकधुर्यः स गणेशितुः पुरः ।। 155

तदस्त्रवर्षं विनिवार्य गोवृषो
वर्षप्रकर्षं सह तै गणेश्वरैः ।
शरान्धकारं च विभिद्य सायकै-
र्मयूखमालीव स दृश्यते स्म ह ।। 156

पक्षीन्द्रपक्षाणि शरैः प्रचिच्छिदे
तनुं च पादौ च शरैरखण्डयत् ।
विहङ्गमस्तत्क्षतजाभितप्तः
पपात कूजन् सह विष्णुनावनौ ।। 157

प्रध्माप्य शङ्खं स ही वीरभद्रः
प्रोवाच विष्णुं क्षतजावृताङ्गम् ।
वसन्तकालोत्थपलाशकद्रुम-
प्रभासमानाङ्गमथो रणस्थले ।। 158

**वीरभद्र उवाच -**

तत्ते क्व दैत्यप्रहरोरुचक्रं
शङ्खं क्व ते कौस्तुभवैजयन्ती ।
न दैत्यपक्षस्य विहारकालः
संहारकालोऽद्य तवेत्यवेहि ।। 159

नाहं हिरण्यकशिपुर्न हिरण्यनेत्र
त्रिविक्रमोऽहं हि तवास्मि सम्प्रति ।
न रावणोऽहं न च कंसदैत्यो
न भार्गवः क्षत्रकुलान्तकारी ।। 160

विभीषिकां ते किमुतात्र जन्ये
इषीकनालानिव सन्दहे ते ।
क्षीणाक्षिकोणेन स देवमुष्णं
वीक्षन् सहस्राक्षमथोऽत्र दक्षम् ।। 161

दीक्षान्वितं त्र्यक्षपदे विरक्तं
लीक्षेव सन्दह्य भगाक्षिसूदनः ।। 162

**सूतः उवाच -**

इत्युक्त्वोत्थित एव खण्डकरधृक् खेटाभिघातैर्हरिं
जानुभ्यां अथ पादघातनिकरैर्व्यालोलयत्तत्र हि ।
दक्षं दीक्षितमप्यपास्तशिरसं चक्रेऽथ रङ्गस्थितं
खड्गेनैव हरिं हरन्तमसकृद् ब्रह्मा प्रसाद्यानमत् ।। 163

**ब्रह्मोवाच -**

क्षमस्व मन्युं च सहस्व विष्णो-
र्महापराधं रणवीरभद्र ।
त्वं त्वीरभद्रोऽसि सुभक्तबृंहित-
स्तथाखिलानां रणगोऽस्यभद्रः ।। 164

इन्द्रोऽपि तत्राशु स वीरभद्रं
प्रणम्य पादावुपगुह्य नात्यजत् ।
उत्थाय याहीति च तेन मोचितो
दयावता प्राह तदाश्रुलोचनः ।। 165

पापस्य दक्षस्य सहायकारणा-
त्सुरासुरास्ते निहतास्त्वयाधुना ।
विष्णोर्यशो भक्षितमेव दैत्य-
पापस्य सङ्गादभवत्स्वनाशः ।। 166

अधोक्षजं रक्षतु वा कटाक्षैः
क्षन्तव्य एवास्त्यपराधबृन्दम् ।
लोकोपकारार्थमसौ त्वयाद्य
संरक्षणीयो नहि नाशमाप्नुयात् ।। 167

**स्कन्द उवाच -**

निष्कोशितासिं स जहार सद्य-
स्तत्केशपाशं विधिवाक्यतोषितः ।
सारथ्यकौचित्यसुसामवाक्यै-
र्जहर्ष तत्राशु स वीरभद्रः ।। 168

श्वसन्तमासन्नसुदुःखखिन्नं
गच्छेति तत्राह हरिं क्रुधा गणैः ।
त्रपानतो माधव एव नत्वा
गणेन्द्रमुख्यं प्रययौ स्वलोकम् ।। 169

खगं समुज्जीव्य यथागतं हरि-
र्दक्षेऽत्र निर्विण्णमना बभूव ।
ता दक्षपत्न्यः सुरवर्यपत्न्यो
यत्नादुपालभ्य पतीन् रणाङ्गणे ।। 170

विमुक्तकेश्यः प्ररुदन्ति सङ्घशो
वैवर्ण्यमालिन्यसबाष्पलोचनाः ।। 171

हा दक्षपक्षसुरताऽद्य गतात्त भागे
लीक्षेव धृष्टा निखिला गणेश्वरैः ।
कस्तं प्रसादयति चापधरोग्रबाहुं
प्रयाम सर्वाः शरणं हि नो गतिः ।। 172

इत्येवमुक्त्वा प्रणताः सुराङ्गनाः
संसान्त्व्य बाष्पाणि निगृह्यतामिति (?)
उवाच भद्रोऽत्र वचस्तदानीं
निन्दा श्रवायाः फलमेतदीशितुः ।। 173

अशाम्भवसहायकृद्भवति पाप ऊनाङ्गको
महेश्वरदयोज्झितो ज्वलितलोलफालानलैः ।
विदाहयति तं परं सुखवरं वा त्यजेत्
विलोकितमिदं यथा मखविभङ्गविघ्नं महत् ।। 174

**सूत उवाच -**

अलीकनीत्या सुरसत्तमानां
पिनाकिनि या स्थिरभक्तिवर्जिता ।
विनाशनी सा प्रबभौ तदानीं
सौदामनी चातिचलेव कामिनी ।। 175

जगर्जुर्गणेन्द्रा मुदा तं गणेन्द्रं
प्रकृष्टोरुघोषैर्दिवं गां भिनन्तः (?)

क्षयद्वीरपादार्चको वीरभद्रो
जयत्येव दक्षसुहृद्देव सङ्घम् ।। 176

सन्धुक्षिताघोक्षज एष वीरो
जयत्येव ईशार्चनासक्तचित्तः ।
महाभस्मरुद्राक्षभाजां शरण्यो
न गण्योऽस्य साम्ये भवेत्कोऽपि वीरः ।। 177

ववर्षुरब्दाः कुसुमोरुवर्षं
ववुश्च वाता सुखसारशीतलाः ।
विस्त्रस्तविश्वं प्रजगाम हर्षं
जग्मुश्च शान्तिं किल सर्वलोकाः ।। 178

हरप्रसादेन स वीरभद्रो
रमावरं तं प्रददार सायकैः ।
दक्षोऽपि संशिक्षित एव देवै
जगाम रुद्रं स पितामहेन ।। 179

।। इति श्रीशिवरहस्ये द्वादशाम्शे
वीरभद्रविष्णुयुद्धं नाम
षष्ठोऽध्यायः ।।



## ।। सप्तमोऽध्यायः ।।

**स्कन्द उवाच -**

तत्र दक्षशिरश्छिन्नं निपपात धरातले ।
विवृत्तदन्तनयनं निर्यज्जिह्वं तदा द्विज ।। 1

प्रविवेश क्षणादेव तदप्याहवनीयजम् ।
तत्प्रविध्वस्तकलशं भग्नयूथं सतोरणम् ।। 2

विदीपितमहाशालं तत्र यज्ञं च विद्रुतम् ।
पुरीषभस्मशकृता वृक्णभाण्डादिराशिभिः ।। 3

वसान्त्रमांसबहुलं भ्रमद्गृध्रालिकूजितम् ।
क्रौञ्चीनामिव तत्रैव रुदत्स्त्रीगणसङ्कुलम् ।। 4

एवं बभौ यज्ञशाला दक्षस्यैव दुरात्मनः ।
दक्षोऽपि *बस्तशिरसा समुदीक्षन्मुहुर्मुहुः ।। 5

शान्तानग्नीन् समुत्पाद्य ऋत्विग्भिः पुनरुद्यतः ।
प्रस्विन्नमनसा दक्षो यज्ञपुच्छं प्रतिष्ठितः ।। 6

प्रायश्चित्तादिकं कृत्वा जगाम शरणं हरम् ।
शम्भुं जगाम गणपैः शान्तस्तस्थौ शिवाग्रतः ।। 7

गणेन्द्रैर्वारणेन्द्राभैर्नमस्कृत्य महेश्वरम् ।
तुष्टाव वीरभद्रोऽसौ महादेवं वृषध्वजम् ।। 8

---

* बस्तः - A goat.

**वीरभद्र उवाच -**

शम्भो भवाम्बुनिधितारणकर्णधार
विश्वम्भराधरविभूषण कालकाल ।
श्रीव्योमकेश गरलाश महेश शम्भो
पाह्यब्जमित्रनयनैणकलङ्कचूड ।। 9

स्तुत्वा नत्वा महादेवं गणेन्द्रो गणपैःसह ।
शम्भोः पार्श्वगतो भूत्वा व्यतिष्ठत्स कृताञ्जलिः ।। 10

**ईश्वर उवाच -**

वत्साद्य परिखिन्नोऽसि गणेशैः सुरजन्यकै ।
नैतच्चित्रं जयस्तेऽद्य मत्कृपावशतोऽभवत् ।। 11

गणेशतामुपगत एभिर्गणवरैः सह ।
हेतिशूलायुधधरैर्भस्मफालाचलोन्नतैः ।। 12

वस मत्तद्विपाकारैः काश्यां नित्यमतन्द्रितैः ।
तत्र पापकृतामन्ते जीवतां विघ्नराशिभिः ।। 13

निघ्नन्गदायुधैः पापान् भस्मरुद्राक्षवर्जितान् ।
यज्ञवापीस्नानहीनान् मणिकर्ण्यार्चनोज्झितान् ।। 14

प्रदोषसोमवारार्चाविहीनाँल्लिङ्गमौलिषु ।
कालाष्टमीव्रताऽश्रद्धान् चतुर्दश्यर्चनोज्झितान् ।। 15

विश्वेशदर्शनेहीनान् स्तोत्रार्चनविवर्जितान् ।
अन्नपूर्णादर्शनार्चाविहीनान् शिक्षयाधुना ।। 17

रुद्रपञ्चाक्षरावृत्ति विहीनान् जहि नित्यशः ।
अशाम्भवान् यातनाभिः संशिक्षय यथारुचि ।। 18

इत्युक्तो वीरभद्रोऽसौ ययौ नत्वा महेश्वरम् ।
अविमुक्तं समासाद्य गणपैस्तत्र शाङ्करैः ।। 19

वीरभद्रेश्वरं लिङ्गं प्रतिष्ठाप्यावसत्तदा ।
शिवाज्ञया तदा भद्रो भद्रदः शाम्भवेषु सः ।। 20

अभद्रदोऽप्यशैवेषु उवास गणपैर्वृतः ।
ब्रह्मापि सान्त्वयामास महादेवं वचोक्तिभिः ।। 21

प्रणम्य देवदेवेशं वियुक्तं दक्षकन्यया ।
तं मन्युना दह्यमानं यज्ञे दक्षावमानितम् ।। 22

**ब्रह्मोवाच -**

सदयं हृदयं तवैव शम्भो
दयनीयोंऽयमिति स्मराधुना माम् ।
इयता मम तावकं मनो मे
मम तावत्प्रभवेत मुक्तये ।। 23

सहमानस्त्वमेवेशो महेशो भक्तवत्सलः ।
संहरात्र महामन्युं दक्षं च सुरसत्तमान् ।। 24

रक्ष जीवितदानेन लोकगुप्त्यर्थमीश्वर ।
त्वयैव सृष्टा निखिला लोकाः सर्वे चराचराः ।। 25

विष्णुस्त्वत्कृपया शम्भो पालकोऽभूत्त्वदाज्ञया ।
सुरा इन्द्रादयः सर्वे अनिलानलवार्भुवः ।। 26

सूर्यचन्द्रेन्द्रवरुणा वासवोऽश्विसुधन्विनः ।
मरुतः पितरः साध्या नागा विद्याधरादयः ।। 27

किं पूरुषाप्सरःसङ्घा निर्ऋतिर्धनपो यमः ।
मुनयो मानवा दैत्या यक्षरक्षोगणा नराः ।। 28

नद्यश्च सागराः सप्तद्वीपाश्च वनराजयः ।
गरुडाः पतगाः सर्पा लोकाः सर्वे चराचराः ।। 29

ग्रहर्क्षाश्च ध्रुवश्चापि रुद्रा भूताः पिशाचकाः ।
गुह्याश्च सिद्धगन्धर्वा नारदाद्या महर्षयः ।। 30

दिग्गजाः शिंशुमाराद्याः कूर्माः शेषादयोऽखिलाः ।
धर्माधर्मौ तथा शास्त्रं वेदाश्च श्रुतयोऽपि च ।। 31

पुराणजालं निखिलं वैष्णवं शाम्भवं तथा ।
आगमाश्च *त्वया प्रोक्ताः (?) सर्वमेतत् त्वयावृतम् ।। 32

त्वयैव पालितं शम्भो त्वय्यन्ते लयमेष्यति ।
जगच्चक्रमिदं शम्भो भूतं भव्यं भवत्तथा ।। 33

त्वद्दयापात्रभूतं हि विवृद्धं भवतु प्रभो ।
त्वत्कोपदग्धं सकलं भूयाच्च सचराचरम् ।। 34

---

* वेदानामपि ईश्वरप्रोक्त्वमत्र वर्णितं भवति । ईश्वरप्रोक्त्वेनैव वेदानां प्रामाण्यं यदि, तर्हि तस्य स्वतः प्रामाण्यं हीयते इतीदं विदुषां विमर्शनार्हम् । आगममात्रस्य ईश्वरप्रोक्तत्वेन प्रमाण्ये न विवादः ।

रक्ष देवान् सदक्षांश्च त्वत्कोपानलपीडितान् ।
महामन्यो मन्युमिमं संहरात्र मखं प्रति ।। 35

सती माया तव विभो मायी त्वं परमेश्वरः ।
कालः करोति निखिलं कालः संहरते प्रजाः ।। 36

कालेन वर्धते सर्वं कालकाल तवाज्ञया ।
कालं कञ्चित्प्रतीक्षस्व सती प्रकृतिरीश्वरी ।। 37

जाता हैमवती शम्भो त्वामायाति पतिं सती ।
भाव्येवं भूतभव्येश त्रिकालज्ञोऽसि शङ्कर ।। 38

त्वत्पादपङ्कजं स्मृत्वा सर्वदुःखक्षयो भवेत् ।
दुःखं सतीवियोगोत्थं निवर्तय महेश्वर ।। 39

त्वं वेत्सि योऽसि सोऽसीति जानास्यात्मानमात्मना ।
त्वमात्मा सर्वभूतानामन्तः शास्ता सनातनः ।। 40

ब्रह्म त्वं निर्गुणः साक्षी चेता नेता परात्परः ।
ऋतं सत्यं परं धाम भूमा सीमा विराट् स्वराट् ।। 41

सम्राट् प्रजापतिर्धाता वेदवेद्यो महेश्वरः ।
प्रणवः प्राण ईशानस्त्वत्तो नान्योऽस्ति कश्चन ।। 42

न वेद महिमानं ते कश्चित्सर्वसुरेश्वर ।
इन्द्रविष्ण्वादिवाक्यैश्च मोहितास्तव मायया ।। 43

तव मायामयैः पाशैर्बद्धाः सर्वे सुरासुराः ।
अस्वतन्त्रा महादेव नैषामागोऽस्ति सम्प्रति ।। 44

रक्ष त्वं करुणादृष्ट्या हतान् सर्वान् सुरानिमान् ।
इत्युक्त्वा दण्डवद्वेधाः प्रणम्य परमार्थतः ।। 45

महादेवं महात्मानं अभयं समयाचत ।
प्रार्थितो ब्रह्मणा तत्र भगवान् परमेश्वरः ।। 46

किञ्चिन्निमील्य चात्मानं प्रपश्यन् शममाययौ ।
हतानां तत्र देवानां प्रददौ पूर्ववत्तनुम् ।। 47

इन्द्रस्य विष्णोर्दक्षस्य *मन्तुमज्ञानतः कृतम् ।
सञ्जहार तदा मन्युं सुरान् प्रति महेश्वरः ।। 48

पूषदक्षमुनीन्द्राणां सेहे देवापराधकम् ।
भ्रंशिताङ्गानि देवानां समयुज्यन्त तत्र हि ।। 49

गणानां तत्र देवस्य प्रसादेन महेशितुः ।
विष्णुः समागतो लक्ष्म्या प्रणम्याथ महेश्वरम् ।। 50

संस्थितो वेधसा तत्र दैवैर्दक्षः समागतः ।
लब्धसंज्ञो भवे भक्तो बभूवातीव विह्वलः ।। 51

प्रणम्य रक्ष रक्षेति साश्रुनेत्रोऽस्तुवद्धरम् ।। 52

**दक्ष उवाच -**

अव शिव सदयं पिनाकपाणे
हृदयं मे तव पादपद्मसद्म ।
न विमुञ्चति मुञ्चतीश शोकं
न शशाङ्कोऽपि सदा मुदे हृदो मे ।। 53

---

* मन्तुम् - अपराधम् । आगोऽपराधो मन्तुश्चेत्यमरः ।

अवते भवते नमस्क्रिया मे
भवते देवेश तत्प्रसादिने
हरते वृजिनाघ सङ्घमेत-
द्धर ते देव कटाक्षकोणपाते ।। 54

स दक्षपरमस्तुत्या प्रीत्या युक्तो महेश्वरः ।
यज्ञस्य च शिरश्छिन्नं पुनः प्रावर्धयत्तदा ।। 55

गाणपत्यं ददौ तस्मै दक्षायाक्लिष्टकर्मणे ।
दक्षो नत्वा महादेवं यज्ञशेषं समापयत् ।। 56

ऋत्विक्पत्न्यादिसहितो दक्षिणाभिः प्रतर्प्य तान् ।
अविमुक्तं ययो दक्षः शिवनिन्दाकृदंहसः ।। 57

प्रमुच्येयमिति स्वैरं तप उग्रं समास्थितः ।
दक्षेश्वराभिधं लिङ्गं प्रतिष्ठाप्यार्चयद्धरम् ।। 58

भस्मरुद्राक्षपुण्ड्राङ्को रुद्रपञ्चाक्षरादरः ।
गङ्गाम्भसा च संसिच्य त्रिकालं बिल्वपल्लवैः ।। 59

स्तुवन्नेवं विरूपाक्षं द्वादशाब्दमुवास हि ।। 60

**दक्षः उवाच -**

पशुपाशहृते नमो नमस्ते
शरणं चरणाम्बुजं प्रपद्ये ।
पशुपतये करवाणि वाचमिष्टां
शरणं यामि शरण्यमिन्दुमौलिम् ।। 61

देवाः प्रणम्य देवेशं प्रसाद्य परमेश्वरम् ।
मौलिबद्धाञ्जलिकरास्तुष्टुवुः सर्व एव ते ।। 62

**देवा ऊचुः -**

चण्डांशुचन्द्रनयनोद्धतबाहुदण्ड-
संलग्नपाशवरयुक्त द्विजार्तिखण्ड ।
वेतण्डवक्त्रकलितेक्षण तुण्डगण्ड-
सत्कुण्डलीशवरकुण्डलमण्डितास्य ।। 63

विवशाः पशवो वयं महेश
भवतान्ताः किल कामपाशबद्धाः ।
पशुपाशविमोचकोऽसि शम्भो
पशुपस्त्वं परिमोचयाशु नः कुपाशात् ।। 64

तद्देवस्तुतिवाक्येन शिपिविष्टो महेश्वरः ।
प्रहर्षमतुलं लेभे तानुवाच महेश्वरः ।। 65

**ईश्वर उवाच -**

क्षान्तापराधाः सर्वेऽपि देवाः सन्तु गतव्यथाः ।
भजन्तु स्वानि धिष्ण्यानि मोदध्वं निजविष्टपे ।। 66

ततः शम्भुवचः श्रुत्वा नत्वा देवं महेश्वरम् ।
ययुस्ते शरणं देवं हर्षिताः स्वाङ्गनायुताः ।। 67

दिव्याङ्गरागभोगाढ्या विमानैस्ते त्रिविष्टपम् ।
इन्द्रो नत्वा महादेवं तत्पादाब्जयुगं तदा ।। 68

प्रपन्नः परया भक्त्या स्तौति देवं महेश्वरम् ।
मौलिबद्धाञ्जलिपुटः सानन्दजलनोचनः ।। 69

**इन्द्र उवाच -**

शरणं किल यामि सामिसोम-
प्रमथोत्तंसकिरीटकोटिजूटम् ।
करटित्वक्पटशोभिसत्कटिं त्वं
भज चेतस्तटनीजटं महेशम् ।। 70

इति स्तुत्वा महादेवं इन्द्रः स्वगुरुणा सह ।
देवराज्यं सुरैः प्राज्यं ययौ शासितुमोजसा ।। 71

विष्णुरप्यतिहृष्टात्मा अष्टमूर्तिं कृपाकरम् ।
नत्वा कृतार्थया वाचा स्तौति देवमुमाधवम् ।। 72

स्वापराधं तदा विष्णुः क्षमितुं परमेश्वरम् ।
मौलिबद्धाञ्जलिपुटो लक्ष्म्या च गरुडेन च ।। 73

**विष्णुरुवाच -**

परिपाहि विभो महेश शम्भो-
ऽमरवृन्दोत्तम पुङ्गवोरुकेतो ।
कामभगान्धकसूदनाऽन्धकारे
प्रमथाधीश सनाथपाशु मां त्वम् ।। 74

वसुधाधृग्वरहार चापपाणे
वसुधास्यन्दनसंस्थ चित्रशक्ते ।
वसुधाराधिपपूज्य देव शम्भो
वसुधाधृक्तनयाप्रियाय ते नमोऽस्तु ।। 75

क्षमस्वापराधं मदीयं महेश
विभो मायया ते निबद्धोऽस्मि दीनः ।
अहं देवमन्यं न मन्ये मदन्यं
महादेव शम्भो प्रसीद प्रसीद ।। 76

**सूत उवाच -**

स विष्णुवचसा तुष्टो महादेवो महेश्वरः ।
उवाच माधवं तत्र ब्रह्माणं वीक्ष्य शङ्करः ।। 77

**ईश्वर उवाच -**

अशाम्भवजनावनं सुरवरातिदुःखावहं
भवे किमु भवाय ते मयि सुभक्तियुक्तो भव ।
वसैव रमया सह विधिरयं च लोके स्वके
चिराय मम वाक्यतो वृजिनमद्य क्षान्तं तव ।। 78

।। इति श्रीशिवरहस्ये द्वादशाम्शे
महादेव प्रसादनं नाम
सप्तमोऽध्यायः ।।



## ।। अष्टमोऽध्यायः ।।

**स्कन्द उवाच -**

तदा ब्रह्मा हरिश्चैव सदक्षो वासवः सुराः ।
नत्वा स्तुत्वा महादेवं ययुर्लोकान् सुरास्तदा ।। 1

महादेवोऽपि विश्वात्मा ब्रह्मणा परिसन्त्वितः ।
जगाम गणवृन्दैश्च नन्दिना विश्वनन्दिना ।। 2

गणानां गर्जनैश्चैव भेरीपटहगोमुखैः ।
काहलैः शङ्खगोशृङ्गैर्नदद्भिः गणवक्त्रतः ।। 3

नानाछत्र धरैरन्यैश्चामरासक्तपाणिभिः ।
गणेन्द्रैः केतुहस्तैश्च चन्द्रस्फाटिकनिर्मलैः ।। 4

भस्मभूषितसर्वाङ्गैर्गणेन्द्रैर्वरुणोपमैः ।
वृषारूढो महादेवः कोटित्रयगणावृतः ।। 5

सत्या वियोगदुःखेन तपस्तप्तुं मनो दधे ।
जगाम मन्दिरे तत्र नानाद्रुम विराजिते ।। 6

चम्पकाशोकपुन्नागबकुलैः समलङ्कृते ।
सालतालतमालढ्ये अङ्कोलकदलीयुते ।। 7

कपित्थपूगहिन्तालरसालपनसावृते ।
पारिजातकसम्पूर्णे नानापक्षिविराजिते ।। 8

पुष्पगुच्छैकसुभगमिलद्भृङ्गकुलाकुले ।
परभृत्सुन्दरगिरा पल्लवोल्लासिमारुते ।। 9

नृत्यन्मयूरकेकाभिर्नदन्नत्यूहशोभिते ।
हंसक्रेङ्कारसरसीसारसैः समलङ्कृते ।। 10

फुल्लहल्लकपद्मालिनीलोत्पल सुकौमुदैः ।
कदम्बमञ्जरीलोलस्रवत्पुष्परजोवृते ।। 11

गलन्मधुस्रवालोलशाखान्दोलितमारुते ।
भ्रमत्सारङ्गमातङ्ग सङ्घर्षितमहाद्रुमे ।। 12

उत्पुच्छचमरीसङ्घे सरघोड्डीनसङ्कुले ।
कस्तूरिकामृगभ्राम्यद्गन्धवाहैकसुन्दरे ।। 13

कपोतगलहुङ्कारै गोलाङ्गूलोत्थहुङ्कृते ।
वानरोदरसम्बद्धस्तन्धयकुतूहले ।। 14

शाखालीढेषु संलीन शशिवक्त्रकणादरे ।
सपक्षपक्षिविक्षेपैः पक्षिपोतैश्च भासुरे ।। 15

खरोरुनखरोत्कीर्णलिक्षावीक्षणवानरे ।
नैकधातुशतैश्चित्रे विचित्रकुसुमोज्ज्वले ।। 16

शाखाशतसहस्राढ्ये दवधूमसमाकुले ।
कदम्बकदलीपुष्पवनान्दोलनसुन्दरे ।। 17

गिरिमस्तकसंस्राविनिर्झरप्रविराजिते ।
पल्वलोदतटान्तस्थगुल्मवल्लीगृहैर्युते ।। 18

फुल्लवल्लीमहावल्लीगुच्छ *सल्लीसशोभिते ।
वेणुसङ्घर्षणोत्पन्नहव्यवाहशिखावृते ।। 19

वेणुक्रीङ्कारबहुले झिल्लीगणविनादिते ।
हल्लीसलास्यं कुर्वद्भिर्द्रुमहस्तैः परस्परम् ।। 20

मातङ्गबृंहितरवैः कोलघर्घरनिःस्वनैः ।
घर्घरैस्तालपत्राणां नारिकेलैश्च शोभिते ।। 21

तद्धूतपत्रसल्लून पक्वनारेलतालकैः ।
समावृता सा भूर्भाति मातङ्गमदपङ्किला ।। 22

विमलस्वादुपानीयैर्नैकप्रस्रवणैर्युते ।
निरूढशष्पसम्पूर्मभूभागसमलङ्कृते ।। 23

वनगोरससन्तप्तशिलातल विराजिते ।
स्निग्धवर्णमहामूलसटावटविराजिते ।। 24

मन्दं च तत्र गणपैर्महादेवो वृषास्थितः ।
महादेवस्य देवस्य शङ्करस्यामितात्मनः ।। 25

दीप्तमाद्यतनं तत्र हैमं मणिविभूषितम् ।
हेमप्राकार संयुक्तं मणितोरणमण्डितम् ।। 26

स्फाटिकैः सुविचित्रैश्च गोपुरैश्च समन्वितम् ।
सिह्मासनैर्मणिमयैः शुभास्तरमसंयुतैः ।। 27

---

1. हल्लीश(स)
2. हल्लीश (स) -Dancing in a ring.

रम्यादर्शगृहैश्चित्रैश्चित्ररङ्गविचित्रितैः ।
वृक्षपाषाणफलकैश्चित्रितैः सौधभूषितैः ।। 28

वितानतानितैश्चित्रैर्दिव्यास्तरणिकावृते ।
पद्मरागैः पुष्परागैर्नीलवैडूर्यनिर्मितैः ।। 29

गोमेदवज्रमुक्ताच्छविद्रुमैश्च विराजितैः ।
मण्डितैः पुष्पमालाढ्यैर्धूपदीपसमावृतैः ।। 30

प्रमथैरावृते तत्र वेणु वीणाब्जनादिते ।
झल्लरीशङ्खपटहभेरीगोमुखडिड्डिमैः ।। 31

सिद्धदेवर्षिगन्धर्वैर्ब्रह्मेन्द्राद्यमरैर्वृतैः ।
किम्पूरुषैस्तथा नागैरप्सरोगणसेवितैः ।। 32

गायद्गन्धर्वनिकरैर्वीणातन्त्रीविराजितैः (विनादितैः) ।
मन्दारैश्चारुशिखरैरुपेतं शङ्करस्तदा ।। 33

दृष्ट्वा न हर्षमापाथ महादेवो महेश्वरः ।
तदा रुद्रगणैः सार्धं निशश्वास मुहुर्मुहुः ।। 34

रुद्धाहिराडिवास्वस्थः स्थाणुः स्थाणुरिव स्थितः ।
तदा सतीवियोगार्तो बभूवातीव विह्वलः ।। 35

दृष्ट्वा चन्द्रमसं रात्रौ फुल्लमल्लीगणानिलम् ।
जिघ्रत्स्वाङ्गमहासर्पपारणां व्यदधाद्धरः ।। 36

विनिश्वसन् तदा देवस्तपस्येव मनो दधे ।
विधाय स्वात्मनात्मानं भस्मरूषितविग्रहः ।। 37

त्रिपुण्ड्रविलसत्फालो रुद्राक्षाङ्गदकङ्कणः ।
जटिलालकसन्मौलिपिशङ्गितगिरिप्रभः ।। 38

प्रभाविभासिसोमार्कः सुन्दरामलविग्रहः ।
सोम धामवृतोत्तंसो महादेवो महेश्वरः ।। 39

उत्फुल्लपुण्डरीकाभमुखमण्डलभासुरः ।
फालानलानिलालोल नेत्राञ्जलसुपक्षकः ।। 40

उद्यद्भानुप्रभा भासिवामलोचनसुन्दरः ।
पूर्वपुण्यसुधाधाममण्डलोत्तुङ्गदक्षधृक् ।। 41

चाम्पेयकलिकोद्दामनासापुटविराजितः ।
बिम्बप्रभावधिक्कारिरदच्छदविशोभितः ।। 42

स्वच्छादर्शकपोलोद्यत्प्रभाभासितदिक्ततिः ।
नागकुण्डल बिभ्राजत्कर्णावर्तविशोभितः ।। 43

शम्बाभकण्ठगरल कीलाललितकन्धरः ।
करिशुण्डाभवृत्तोरुबाहुदण्डविराजितः ।। 44

चतुर्दशोरुभवनस्थानायितमहोदरः ।
वृत्तगम्भीरसुभगनाभीकूपविराजितः ।। 45

त्रिवलीललितोदारमृगेन्द्रसमसत्कटिः ।
व्याघ्रचर्मपरीधानः कृत्तिवासा महेश्वरः ।। 46

रम्भावृत्तोरुस्निग्धोरु रुक्मदण्डपदद्वयः ।
पादपद्मयुगालीढव्यालीमञ्जीरफूत्कृतिः ।। 47

नागहारो महादेवस्त्यक्त्वा चायुधमुत्तमम् ।
मृगटङ्कौ परित्यज्य वटोरुविटपास्तृते ।। 48

भूतलेऽजिन संस्तीर्णे व्याघ्राजिन विराजिते ।
योगपट्टाभिरामेण पादावाबध्य चान्यतः ।। 49

भस्माङ्गरागसुभगदेहकान्तिविराजितः ।
नासाग्रन्यस्तनयनो भगनेत्रनिपातनः ।। 50

उग्रोऽप्यव्यग्रमनसा इन्द्रियाण्यथ संहरन् ।
विश्वतः परमेशानः रुद्रो विश्वाधिकः प्रभुः ।। 51

आत्मानमात्मना ध्यायन् बाह्यव्यापारवर्जितः
तमसः परमं साक्षात् ब्रह्म तन्निर्गुणं परम् ।
चतुर्थं शिवमद्वैतं पूर्णात्पूर्णतरं शिवम्
विश्वतश्चक्षुषं देवं विश्वतोमुखमीश्वरम् ।। 52

सर्वेन्द्रियगुणातीतं सर्वेन्द्रियविवर्जितम् ।
आकाशकोशं विश्वेशं चेतनानां च चेतनम् ।। 53

निरञ्जनं शिवं नित्यं व्याप्यव्यापकवर्जितम् ।
भूतं भव्यं भविष्यच्च यद्भाव्यमभयं परम् ।। 54

परात्परं साक्षिणं च विश्वस्मादुत्तरोत्तरम् ।
अमृतं परमं धाम सीमा पुच्छप्रतिष्ठितम् ।। 55

ऋतं सत्यं परं धाम वृद्धं ब्रह्म सनातनम् ।
अणोरणुं महान्तं तमीशानं विश्वतोमुखम् ।। 56

पुरीशयं गुहासंस्थं अवस्थातीतमीश्वरम् ।
शाश्वतं ध्रुवमक्षय्यं क्षराक्षरविलक्षणम् ।। 57

अपाणिपादजघनमचक्षुर्घ्राणमीश्वरम् ।
अनक्षिघ्राणरसनं सर्वेन्द्रियगुणातिगम् ।। 58

शाश्वतं शान्तगम्भीरवेद्यं वेद्यविवर्जितम् ।
रसं परं हरं तारं प्रणवं नादबोधितम् ।। 59

योगसाङ्ख्यदुरापं तं सर्वात्मानं गुणातिगम् ।
वेदवेदान्तसंवेद्यं विश्वात्मानं सनातनम् ।। 60

भावाभावैकरहितं हृदयं शरणं शिवम् ।
प्रत्यग्दृश्यमनौपम्यं सर्वदृक्सर्वहृद्गतम् ।। 61

वेदवेद्यं नतद्वेद्यमभेद्यं द्वैतवर्जितम् ।
आनन्दं व्यापकं बोधं सर्वचैतन्यबोधदम् ।। 62

बहुरूपमरूपं च चिद्घनं भानभानकम् ।
शिवं तुरीयमद्वैतं सर्वान्तर्यामिनं हरम् ।। 63

विश्वात्मानं विश्वरूपं वृत्तिवाग्रूपवर्जितम् ।
सूक्ष्मं सूक्ष्मप्रतीकाशं वाच्यवाचकवर्जितम् ।। 64

न दिव्यं नान्तरिक्षं च वेदाश्रमविवर्जितम् ।
आनन्दरूपममृतं सदैकरसमद्वयम् ।। 65

अखण्डैकरसं देवः स्वात्मानं स्वात्मनि स्थितम् ।
निश्चलस्थाणुवत्स्थाणुरतिष्ठद्गणसेवितः ।। 66

दशसाहस्रमब्दानां एवं तेपे तपो हरः ।। 67

**कुमार उवाच -**

स्वात्मानमानन्दमखण्डबोधं
वेदान्तसारं परमेश्वरं तदा ।
स्वात्मानमालोक्य सनातनं शिवं
न वेद किञ्चान्यदपीश्वरस्तदा ।। 68

।। इति श्रीशिवरहस्ये द्वादशांशे
महादेवतपश्चर्या नाम
अष्टमोऽध्यायः ।।



## ।। नवमोऽध्यायः ।।

**मुनय ऊचुः -**

कथं हिमवतः पुत्री सञ्जाता सा सती मुने ।
उद्वाहोऽत्र कथं शम्भोः पार्वत्या सह शाङ्करे ।। 1

तन्नो वद विशेषेण जन्म देव्याः पिनाकिनः ।
उद्वाहमपि तच्छम्भोस्तारकारे पिनाकिनः ।। 2

विस्तरेण वदास्माकं यथा स्कन्दमुखाच्छ्रुतम् ।
जैगीषव्याय मुनये सुराणां गणपाग्रतः ।। 3

**सूत उवाच -**

एवमेव पुरापृष्टः सुब्रह्मण्यो हरात्मजः ।
जैगीषव्येन मुनिना गणैःसुरगणैः सह ।। 4

तमाह तारकारातिः पार्वत्या जन्म सत्तमः ।
तदा हिमवतो गर्भे तारकारिः स्वकोद्भवम् ।। 5

सेनापत्ये स्थितः स्वस्य गजास्यस्य समुद्भवम् ।
त्रिपुराणां च सम्मर्दं कथयामास विस्तरात् ।। 6

**सुब्रह्मण्य उवाच -**

यदा सती तनुं त्यक्त्वा योगेनैव स्वतेजसा ।
सुमुहूर्ते सुदिवसे मेनागर्भे समाविशत् ।। 7

विचित्रशक्तिः सा देवी माया पशुपतेस्तदा ।
तत्रैव दशमे मासि शुभलग्ने ग्रहैर्युते ।। 8

पञ्चग्रहेषूच्चगेषु तदा हिमवतो गृहे ।
जज्ञे तत्र महादेवी तत्रासीदुत्सवो महान् ।। 9

देवास्तत्र समाजग्मुर्विष्णुब्रह्मादयः सुराः ।
मरुतो वसवः साध्या गन्धर्वाश्च जगुः कलम् ।। 10

देवदुन्दुभयो नेदुः पुष्पवृष्टिरभूच्च खात् ।
नृत्यन्त्यप्सरसो हृष्टास्तदा हिमवतो गृहे ।। 11

सोऽपि विश्राणयामास धनधान्यं गवां गणम् ।
रत्नानि चैव वासांसि स ददौ शाम्भवेषु सः ।। 12

मुनयः पूजितास्तेन नारदाद्या महर्षयः ।
विष्णुब्रह्मादिविबुधान् गन्धपुष्पैः समार्चयत् ।। 13

भक्ष्यैर्भोज्यैश्च वासोभिर्भूषणैर्मुदमादधत् ।
जातकर्मादिकर्माणि चकार स गिरीश्वरः ।। 14

ययुः सन्तोषमतुलं मुदा ते विबुधर्षयः ।
मेनया सहितां दृष्ट्वा पार्वतीं सूतिकागृहे ।। 15

उत्तानशयनां बालां नीलकुन्तलमूर्धजाम् ।
पद्मपत्रेक्षणां चारु बिम्बोष्ठीं पद्मवक्त्रकाम् ।। 16

कम्बुकण्ठीं मृणालाभबाहुद्वयविराजिताम् ।
रक्ताब्जाभसुहस्तां च नखचन्द्रयुताङ्गुलिम् ।। 17

बालारम्भाभवृत्तोरुस्फिग्जङ्घाजघनावृताम् ।
फुल्लपद्मभपादेन उत्तानेन विराजिताम् ।। 18

द्वितीयासोमसङ्काशपादाम्बुनखावलिम् ।
व्यालोलनयनां बालां सर्वभूषणभूषिताम् ।। 19

रत्नग्रैवेयवलयैर्मुक्ताहारविराजिताम् ।
फालमध्यालकालोलमुक्ताजालकभूषिताम् ।। 20

तिलकाढ्यमुखेन्दूत्थकर्णावलिकभूषिताम् ।
रूषितां दिव्यगन्धेन दिव्यपुष्पैः सुरार्चिताम् ।। 22

काञ्चीखचितमध्यां च क्षुद्रघण्टालसत्कटिम् ।
पादनूपुर संरावजित क्रौञ्चवरस्वनाम् ।। 23

दिव्यवासोभिराच्छन्नां लोलान्दोलनवीजिताम् ।
देवपत्न्यः समागत्य शची स्वाहा स्वाधा रमा ।। 24

नीराजयन्ति तां देवीं दिव्यमङ्गलगायनैः ।
रक्षां रक्षाकरीं तस्या राक्षसेभ्यस्तदा मुदा ।। 25

रात्रौ रात्रौ पठन्ति स्म समवेता महर्षयः ।
गायन्ति ललितं वल्गु मधुरं गायनास्तदा ।। 26

तद्गानेन च सा देवी विनिद्राति दिने दिने ।

**देवस्त्रियः ऊचुः -**

अयि जगदम्ब कदम्बवनस्थित नीपविदीपितसौध-
युतामृतवार्धितरङ्गित वातसुपोतक वीजितरत्नगण-
प्रभ लोलकडोलवरासन तात वितान सुवस्त्रमणीगण-
पुष्पविराजितफुल्लसुहल्लक लोलसमावृतमञ्चविकर्षण
कूजितकम् ।। 27

घनरवरागसुरागविरागमृगावलि धूत सुचामर-
चन्द्रक वीजनवीजितमारुतसापधनावृत चन्द्र-
समप्रभ धूततराकृति देवगजाङ्गनगीतमिदम् ।। 28

विश्रुतमणिगणभूषणकृतरव रिङ्खण झणझण
रव वर घोषण निद्रित हर्षितधर्षितमेध सुचातकपोतक-
जातक भावुककल्पन शिल्पनजातसुसम्भ्रमदिग्गज-
सुद्विजगर्जन तोषस्तुतावितसर्वसुरावनपावन-
सुन्दर निर्जरदारकृतस्तुतिनिद्रितपर्वतबाल
मबालतनुप्रभभावितनतजनपोषितविश्रुत गीतमिदम् ।। 29

एवं गीतेन तां बालां देव्यो निद्रापयन्त्यपि ।
लालयन्ति स्त्रियः काश्चित्स्नापयन्ति मनोरमाः ।। 30

भूषयन्ति तथा बालं तिलकैर्वेणिमण्डनैः ।
पाययन्ति तथान्यास्ता धिक्कृतामृतमुत्तमम् ।। 31

दिने दिने महादेवीं तथा नीराजयन्त्यपि ।
दुकूलवसनैश्चित्रैर्वासयन्ति स्त्रियोऽखिलाः ।। 32

एवं तत्र महादेवीं पूजयन्ति सुराङ्गनाः ।
तदा सा ववृधे बाला कला चान्द्रमसीव सा ।। 33

तां दृष्ट्वा पार्वती देवीं हिमवान् मेनया सह ।
नमस्कृत्वाऽथ तुष्टाव मौलिबद्धाञ्झलिः शिवम् ।। 34

हिमवानुवाचः -

प्रपद्ये शिवेऽद्यैव ते पादपद्मं
हराद्यामविद्यां प्रदेह्याद्यविद्याम् ।
न ते मद्यमांसादिमीमांसपूजा-
प्रकारेऽतिदूरं गिरिं मामवेहि ।। 35

महाघौघनीहारघोरान्धकार-
प्रशिक्षानुरूक्षप्रभाऽहस्करा त्वम् ।
विदित्वा च नत्वा च स्तुत्वा च वाचा
समस्तेषु नान्यो मदन्यो विधन्यः ।। 36

धराधीशकन्ये शिवे सामिसोम-
प्रशस्तैकमस्ते नमस्ते सुहस्ते ।
त्वदन्यत्र लोके न लोके सशोकं
सभूकोपमं यूकवद्भाति मे तत् ।। (?) 37

न मे द्रापिकान्तोरुपादप्रकाशात्
न चेन्द्रेन्द्रलोकेषु वा किं दरिद्रम् ।
अतः सान्द्र सौख्यैक निःसीम तन्द्रा-
सुषुप्तौ भजाम्यद्रिकन्यां मदन्याम् ।। 38

न मान्यो न धन्यो भजेद्यस्त्वदन्यां
कलङ्की भवेच्चाभजंस्त्वांमजस्रम् ।
खरः सूकरः सङ्करो वानरो वा
नरः पामरः कातरो नित्यदुःखी ।। 39

एवं गिरिवराधीशस्तां तुष्टामकरोत्ततः ।
तां मेनां तं गिरिश्रेष्ठं सा देवी समभाषत ।। 40

गिरे चिच्छक्तिरेवास्मि महादेवस्य वेधसः ।
सुराणां कार्यमुद्दिश्य सञ्जातास्मि तवोदरे ।। 41

न मत्तः पृथगस्तीशः प्रभा चान्द्रमसी यथा ।
तथाऽविनाभवा शक्तिरस्म्यहं परमेश्वरी ।। 42

मत्तो ब्रह्माऽभवद्विष्णुः सेन्द्रा देवा महर्षयः ।
चराचरमिदं विश्वं ग्रसामि विसृजाम्यहम् ।। 43

मय्येवान्ते लयं याति वटधानेव तत्तरुः ।
सर्वेश्वरी सर्वशक्तिरहमेका सनातनी ।। 44

आपः पृथ्वी च खं वायुस्तेजसांशक्तिरीश्वरी ।
अप्सु च स्यन्दनी शक्तिः पृथिव्यां गन्धदायिनी ।। 45

वायौ सञ्चालनी शक्तिर्ज्योतिःशक्तिश्च तैजसी ।
आकाशे व्यापिकाशक्तिरस्म्यहं भुवनेश्वरी ।। 46

स्वाहा स्वधा धृतिर्मेधा विद्याविद्या सरस्वती ।
सर्वेषां ब्रह्मकीटानां जगत्संसारवर्तिनाम् ।। 47

करोमि निमिषोन्मेषैर्जगत्संहरणोदयौ ।
केनापि कारणेनैव सञ्जातास्मि गृहे तव ।। 48

तस्मात्त्वं लोकमार्गेण महेशाय प्रदेहि माम् ।
ब्रह्मणोऽनुमतेनैव देशकालोचिते शुभे ।। 49

मूहूर्ते ऋषिभिः सार्धमिहायां मायिनी गिरे ।
ते नाहं सुप्रसन्नास्मि मेनायां त्वयि चानघ ।। 50

धन्यस्त्वं सुप्रसन्नास्मि भोगे भाग्संभविष्यसि ।
नान्यस्मै सत्यमेतन्मां शर्वे दातुं त्वमर्हसि ।। 51

इत्युक्त्वा सा हैमवती पुनर्बालवदास्थिता ।
तां लालयन्ति गिरयो गिरिपत्न्यः समागताः ।। 52

विन्ध्यमन्थरकैलासमैनाकाद्यास्तथेदृशः ।
नीलश्च शतशृङ्गोऽथ वराहो रैवतस्तथा ।। 53

मेरुः सह्यो महेन्द्रश्च तत्र गोवर्धनो गिरिः ।
गिरिराजं नमस्कृत्य तुष्टुवुर्गिरयस्तदा ।। 54

धन्यस्त्वं हिमशैलेश यस्य माया सनातनी ।
पुत्री जाता भवायैव देया कन्या मनोरमा ।। 55

स एव सर्वाधिपतिः पतित्वेऽस्या महेश्वरः ।
त्वया वरो हरो वीरो लोकनीयः सुरोत्तमः ।। 56

स मायी पुरुषो गौरी तस्येयं प्रकृतिः परा ।
तेनानन्या महादेवी त्वया धन्येन चेतसा ।। 57

देया देवाय विधिवत्तेनास्मत्कुलमुन्नतम् ।
विख्यातं गिरिवर्याणां भविष्यति न संशयः ।। 58

इत्युक्त्वा गिरिराजेन्द्रं गिरयः सर्व एव ते ।
गिरिशाय महेशाय दातुं चक्रुर्मतिं नगाः ।। 59

साऽप्यवर्धत कालेन किञ्चिद्यौवनमाप सा ।
धूलिक्रीडास्वपि शिवं पूजयामास शङ्करी ।। 60

ततः सा पालिकालीभिः कन्दुकैर्हेलिलास्यकैः ।
वृक्षान्दोलैः कुमारीणां क्रीडाश्चक्रे महेश्वरी ।। 61

नागगन्धर्वकन्याश्च तत्र तत्पर्वतस्थिताः ।
मुनिकन्यास्तथाचान्या गिरिकन्यां सिषेविरे ।। 62

लास्योल्लासैस्तथा हासैः सा पितुर्मुदमादधात् ।
मेनापि धन्या कन्यां तां विलोक्यातीव हर्षिता ।। 63

तस्या यौवनसौन्दर्यं नान्यत्र स्थितमीक्ष्य सा ।
सास्राविलाक्षी तां नित्यं अपश्यद्दीनचेतसा ।। 64

कं पतिं प्राप्स्यते देवी नरेषु च सुरेषु वा ।
तां वीक्ष्य विस्मितौ तत्र मेना च हिमभूधरः ।। 65

वर्णयामासतुस्तां तौ पार्वतीं कन्यकामिमाम् ।

**हिमवान् उवाच -**

श्रोणी सैकतधोरणीव तरुणीरत्नस्य नाणीयसी ।। 66

वाणी फणितवर्षणी कुचतरी क्षोणीभृदाक्षेपणी ।
पाणी पद्मतृणी कृतिक्षणभृगी वेणी कृपाणीव ते
बाणी भूतचकास्यरम्यहरिणीधिक्कारिणी चाक्षिणी ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे गौर्युत्पत्तिर्नाम
नवमोऽध्यायः ।।



## ।। दशमोऽध्यायः ।।

**स्कन्द उवाच -**

इत्थं चिन्तयतोः पित्रोस्तोषितुं परमेश्वरम् ।
पार्वती पर्वतसुता तपसीत्थं मनो दधे ।। 1

कदाचित्पितुरङ्कस्था मेनया लालिता तदा ।
प्राह नम्रमुखी बाला पितरं हिमभूधरम् ।। 2

**पार्वत्युवाच -**

ताताहं तप्तुमिच्छामि कुतस्तप्तुं वराश्रयम् ।
नानाजनसमाकीर्णं सङ्कीर्णं मृगपक्षिभिः ।। 3

स्वच्छाम्बुफलवृक्षाढ्यं यत्र मे स्याद्रतिप्रदम् ।
तत्राहं तप्तुमिच्छामि मामनुज्ञातुमर्हसि ।। 4

तत्पार्वतीवचः श्रुत्वा पर्वतेन्द्रः स मेनया ।
उवाच बाष्पपूर्णाक्षस्तां कन्यां स्वाङ्कसंस्थिताम् ।। 5

**हिमवानुवाच -**

आः किमुक्तं त्वया बाले तपः क्व नु तनुः क्व ते ।
शिरीषपुष्पमृदुला तनुर्विद्योतितातपम् ।। 6

कथं सहेत धाराणां वर्षं हिमसमुद्भवम् ।
सिह्मशार्दूलशरभवृकभल्लूकनादिते ।। 7

कथं न भीतिर्भविता भामिनि वनसङ्कटे ।
कण्टकैरावृततले मातङ्गवरसङ्कुले ।। 8

सदा दुःखकरं बाले तपो मुनिनिषेवितम् ।
सञ्जाता ब्राह्मणकुले वर्णिनो वेदधारिणः ।। 9

गुरवे दक्षिणां दत्वा गृहस्था यज्ञयाजिनः ।
पुत्रानुत्पाद्य वन्यास्ते भवन्ति किल बालिके ।। 10

ततोऽपि ते विरज्यैव सन्यासाश्रममाश्रिताः ।
एकाकिनो निर्भयेन सञ्चरन्ति वने सदा ।। 11

अतस्त्वं भूषणैर्युक्ता खेलन्ती पालिकागणैः ।
बालिकाभिः सदा बाले प्रमोदं ददती मम ।। 12

वसात्र न सहे बाले वियोगं तव पार्वति ।
इत्युक्ता भूधरेणाम्बा पुनस्तं समभाषत ।। 13

**पार्वत्युवाच -**

महादेवं महात्मानं तपसा तोष्य शङ्करम् ।
अवाप्तुं तं महेशानं तपस्ये परमं तपः ।। 14

मा दुःखं परमं तात पर्वतेन्द्र वियोगजम् ।
तवैव कुलमुत्कृष्टं भवेत यदि सङ्गता ।। 15

मा निर्बन्धं कुरुष्वात्र कारणेन तवोदरे ।
सञ्जातास्मि च मेनायां प्रकृत्याहमिहास्थिता ।। 16

तस्याः सुवचसा तत्र मेनया सह भूधरः ।
सम्मन्त्र्य सुशुभे लग्ने देवीं स्नाप्य सुभूषणैः ।। 17

वासोभिर्गन्धपुष्पाद्यैरलङ्कृत्य च पार्वतीम् ।
तद्वियोगासहो वाचमुवाचेमां विचक्षणः ।। 18

**हिमवान् उवाच -**

हितं वदामि ते पुत्रि श्रुणु मत्तस्तपः स्थिता ।
ममैव मौलिविवरे केदारार्चनतत्परा ।। 19

नानामुनिजनाकीर्णे नानासिद्धविराजिते ।
नानापक्षिरुतापारमृगसङ्घनिषेविते ।। 20

सरोवरैकबहुले प्रफुल्लकमलोत्पले ।
अत्र केदारनाथस्य पूजनान्मुक्तिभाङ्नरः ।। 21

बहवोऽत्र समभ्यर्च्य सुराश्च मुनयः पुरा ।
लेभिरे वाञ्छितान् कामान् तपसा तोष्य शङ्करम् ।। 22

इत्युक्तां(?) तां समालिङ्ग्य मेनया हिमभूधरः ।
पार्वतीयैर्गणैर्युक्तो नानावर्णैर्दुरासदैः ।। 23

मेनया च समैनाको गिरिकन्यायुतो ययौ ।
नानादुन्दुभिनिर्घोषैः पटहानकगोमुखैः ।। 24

पुष्पलाजोरुवर्षेण हर्षेण महता युतः ।
देव्या विमानमारुह्य पुष्पदामावलम्बिना ।। 25

पताकाचामर भ्राजिदिव्यच्छत्रेण भास्वता ।
नीराजयन्ति तां देवीं गिरिसंस्था वराङ्गनाः ।। 26

तपस्यभिप्रयातां तां देवा देवीं दिवि स्थिताः ।
सुमैर्ववर्षुश्च तदा गन्धर्वाप्सरसो जगुः ।। 27

ननृतुर्मुनयस्तत्र जेपुः शान्तिं तदाखिलाः ।
विमानादवरुह्याशु केदारशिखरे स्वके ।। 28

उत्फुल्लसहकारौघे तमालालिविराजिते ।
तालसङ्घर्षिमरुता राजिते पानसैर्वनैः ।। 29

फुल्लमन्दारविपिने कर्णिकारालिशोभिते ।
कदम्बकेतकीगुच्छसञ्छन्नालिविराजिते ।। 30

दाडिमीनिबिडे वृक्षैः फलपुष्पावनामितैः ।
चम्पकोद्दामगन्धाढ्ये कृतमालविराजिते ।। 31

अशोकदेवदारूणां तरुभिर्बिल्वसंयुते ।
अशोकैः शोकहारैश्च मातुलुङ्गैः फलानतैः ।। 32

करजैः ककुभैश्चैव कपित्थैर्बदरैर्युते ।
नारङ्गरञ्जिते तत्र पक्षिसङ्घविराजिते ।। 33

नदन्नत्यूहकारण्डचक्रवाकोपकूजिते ।
भ्रमत्सारङ्गमातङ्गपतङ्गव्रजषट्पदे ।। 34

मुनीनामाश्रमयुते श्रमहारिणि वारिणि । (?)
उत्फुल्लकरवीरालिकदलीदललोलिते ।। 35

नारिकेलद्रुमैश्चैव नानातरुविराजिते ।
शिखण्डिताण्डवकृतकेकालापविनादिते ।। 36

पुंस्कोकिलोरुविरुते हंसक्रेङ्कारघोषिते ।
समुत्फुल्लाब्जिनीं गाह्य परिधाय दुकूलकम् ।। 37

गिरिणा समनुज्ञाता तपसे धृतनिश्चया ।
धृतत्रिपुण्ड्ररुद्राक्षा कङ्कणाङ्गदवर्जिता ।। 38

सूक्ष्मपर्णैकवसना अपर्णा तृणसंस्तरा ।
कृतधम्मिल्लजटिला सखीभिः सा मनोरमा ।। 39

विमुक्तमुक्तामाला साऽभूषयत्तत्तपोवनम् ।
स्ववक्त्रजातसौन्दर्यं पद्मेषु निदधे शिवा ।। 40

स्वनेत्रनीलिमानं सा ददौ नीलोत्पले शिवा ।
स्वनासापुटसंशोभां ददौ चम्पककुड्मले ।। 41

स्वाधरस्य च रागं सा विद्रुमेषु न्यधात्तदा ।
रदनावलिसंशोभां कुन्देषु समकल्पयत् ।। 42

कपोलयोर्यत्सौन्दर्यं आदर्शेषु ददौ तदा ।
कण्ठमण्डलशोभां च शङ्खेषु परितन्वती ।। 43

मातुलुङ्गेषु कुचयोस्तुङ्गशोभां न्यधाच्च सा ।
जघनस्थलशोभां च कुम्भिमस्ते ददौ शिवा ।। 44

स्वोरुशोभां च रम्भायां निदधे हिमशैलजा ।
प्रपदस्य च सौन्दर्यं कमठेषु ददौ शिवा ।। 45

कटिभागस्थसौन्दर्यं सिह्मेषु निदधे तदा ।
नखानां च रुचिं देवी सामिचन्द्रे ददौ शिवा । 46

भूशय्या साऽभवद्बाला वर्षं पवनभोजना ।
वर्षं पर्णफलाहारा निराहारा च हायनम् ।। 47

हेमन्ते जलमध्यस्था वसन्ते स्थण्डिलेशया ।
ग्रीष्मे पञ्चाग्निनिरता वर्षास्वभ्रावकाशगा ।। 48

रुद्रमावर्तयन्ती सा पञ्चाक्षरपरायणा ।
तपस्यन्तीं तथा देवीं मुदा तत्र महर्षयः ।। 49

समवेताः सदारास्ते विस्मयन्तश्च संस्थिताः ।
नित्यं सैकतलिङ्गे सा पूजयामास शङ्करम् ।। 50

तत्रत्यवृक्षाश्च मृगाः पक्षिणो रक्षयन्ति (?) ताम् ।
करिणः पुष्करासारैस्तस्या अङ्गमशीतयन् ।। 51

शिखण्डिनः स्वपिञ्छाग्रैर्ग्रीष्मार्तां तामवीजयन् ।
चमराः पुच्छगुच्छैस्तां धुन्वन्तो दंशवारकाः ।। 52

कोकिला रागसल्लासैस्स्तुवन्त इव संस्थिताः ।
शाखिनः स्वस्वशाखाभिः छादयन्त्यातपार्दिताम् ।। 53

गिरिराडपि तां देवीं विलोक्यायाति याति च ।
सख्योऽभवन् तदा तस्या मुनिपत्न्यः कुमारिकाः ।। 54

सुपुष्पापचयैस्तत्र कन्दमूलफलादिभिः ।
शीतपानीय दानेनाप्यसेवन्त महेश्वरीम् ।। 55

केदारेश्वरपूजायां निरता द्वादशाब्दकम् ।
पञ्चामृताऽऽसेचनेन गन्धपुष्पैर्मनोहरैः ।। 56

धूपर्दीपैश्च नैवेद्यैः प्रणामप्रक्रमादिभिः ।
पूजयामास सा देवी गिरिराजसुमौलिगा ।। 57

तेन सम्प्रेषितेनैव संभारेण वरा शिवा ।
सम्पूजयेत्स्तुवन्त्येवं स्तोत्रेण परमेश्वरम् ।। 58

भाद्रशुक्लतृतीयायां सिक्तायां महेश्वरम् ।
समर्चयन्ती रात्रौ सा बिल्वपत्रैर्महेश्वरम् ।। 59

साऽकरोज्जागरं देवी केदारेशस्तवे रता ।
विरता सर्वभोगेभ्यः शर्ववि(सं)न्यस्तमानसा ।। 60

**पार्वत्युवाच -**

प्रभाकरनिशाकरज्वलनलोचनं शङ्करं
वतंसितसुधाकरं गरधरं च गङ्गाधरम् ।
भजामि च मयस्करं वरगुणौधरत्नाकरं
यमान्धकहरं हरं फणिगणेशहारं शिवम् ।। 61

अरुणाभरणं महेश शम्भो
शरणं त्वां समुपैमि देव देव ।
करुणावरुणालयोऽसि शम्भो
प्रणमन्तीमभिवीक्ष्य देव पाहि ।। 62

कुम्भीन्द्रकुम्भस्थितपादपद्मं
मत्तेभकृत्त्यम्बरमाशुतोषम् ।
कुम्भ्यास्यसूनुमथ कुम्भभवादिपूज्यं
कुम्भेश्वरं भवभयापहरं प्रपद्ये ।। 63

केदारेश महेश शङ्कर विभो काकोदराकल्पक
हे विश्वाधिक शीतदीधिति कलाचूडाल गङ्गाधर ।
गिरिराजशिरोधरैकवास
कृपया पाहि वृषाधिनाथवाह ।। 64

**सूत उवाच -**

इत्थं साऽस्तुवदीश्वरेश्वरमुमा केदारसेवादरा
दूराद्वारित पातका गिरिवरे धीरैकवीरा स्थिता ।
तामाराद् ददृशुः सुरासुरगणा देवीं प्रणम्यादरात्
धातारं प्रययुश्च तारकमहाशूरेण संपीडिताः ।। 65

।। इति श्रीशिवरहस्ये द्वादशाम्शे
देवीतपश्चर्या नाम
दशमोऽध्यायः ।।



## ।। एकादशोऽध्यायः ।।

**स्कन्द उवाच -**

एतस्मिन्नेव काले तु तारको नाम दानवः ।
तारकात्मा महातेजा बभूवानन्दिनन्दनः ।। 1

तस्य पुत्रास्त्रयश्चैव तारकाक्षो महाबलः ।
विद्युन्माली च बलवान् कमलाक्षश्च वीर्यवान् ।। 2

तस्याभवत्सुतो वीरस्तारो नाम महाबलः ।
तपसा लब्धवीर्यश्च प्रसादाद्ब्रह्मणः प्रभोः ।। 3

सोऽपि तारो महातेजास्त्रैलोक्यं सचराचरम् ।
विजित्य समरे पूर्वं विष्णुना च निषूदितः ।। 4

तदा समभवद्युद्धं तुमुलं रोमहर्षणम् ।
दिव्यवर्षसहस्रं तु दिवारात्रमविश्रमम् ।। 5

सरथं विष्णुमादायोत्ससर्ज शतयोजनम् ।
तारेण निर्जितश्चैव दुद्राव गरुडध्वजः ।। 6

ताराच्छतगुणं तप्त्वा लब्ध्वा शतगुणं बलम् ।
पितामहाज्जगत्सर्वमवाप दितिनन्दनः ।। 7

देवेशप्रमुखान् सर्वान् जित्वा स दितिनन्दनः ।
द्रावयामास वै देवान् सर्वलोकेषु मायया ।। 8

देवताश्च सहेन्द्रेण तारकाद्भयमोहिताः ।
न शान्तिं लेभिरे शूराः शरणं वा भयार्दिताः ।। 9

तदाऽमरपतिः श्रीमान् सन्निवार्यामरान् प्रभुः ।
उवाच वाक्पतिं देवो देवानामपि सन्निधौ ।। 10

भगवंस्तारको नाम तारेयो दानवाम्बुदः ।
तेन स्मो निर्जिताः सर्वे वत्सा गोपतिना यथा ।। 11

भयात्तस्मान्महाभाग बृहद्बुद्धे बृहस्पते ।
अनिरुद्धा भ्रमन्त्येते शुकुन्ता इव *पिञ्जरात् ।। 12

अस्माकं यान्यमोघानि आयुधानि गिरां वर ।
तानि मोघानि जायन्ते अमरारिप्रभावतः ।। 13

दशवर्षसहस्राणि द्विगुणानि बृहस्पते ।
विष्णुनाऽऽयोधितो युद्धे विष्णुना प्रभविष्णुना ।। 14

कथमस्मद्विधास्तस्य स्थास्यन्ते समरेऽग्रतः ।
एवमुक्तस्तु शक्रेण जीवः सार्धं सुराधिकैः ।। 15

सहस्राक्षेण च विभुं सम्प्राप्य च पितामहम् ।
सोऽपि तस्य मुखाच्छ्रुत्वा प्रणतिं कमलासनः ।। 16

देवैशेषैः सेन्द्रैस्तु जीवमाह पितामहः ।
जाने चार्तिं सुरेन्द्राणां तथापि शृणु साम्प्रतम् ।। 17

---

* पिञ्जर - पञ्जर

विनिन्द्य दक्षं या देवी सती दग्धतनुःपुरा ।
उमा हेमवतीं जज्ञे सर्वलोकनमस्कृता ।। 18

रूपयौवनसम्पन्ना सा महेश्वरकामिनी ।
घोरं तपस्तप्यतेऽद्य शुभे केदारगह्वरे ।। 19

शङ्करोऽपि स्वयं देव्या वियुक्तस्तपसि स्थितः ।
उभयोरनयोर्योगः कार्यः कार्यार्थिभिः सुरैः ।। 20

तयोर्वीर्येण सम्भूतः स्कन्दः शक्तिधरः प्रभुः ।
षडास्यो द्वादशभुजः सेनानीः पावकः प्रभुः ।। 21

स्वाहेयः कार्तिकेयश्च गाङ्गेयः शरषण्डजः ।
सेनापतिः कुमाराख्यः सर्वलोकनमस्कृतः ।। 22

लीलयैव महादेवः सबलं तारकात्मजम् .
बालोऽपि विनिहत्यैको देवान् संतारयिष्यति ।। 23

एवमुक्तस्तदा तेन ब्रह्मणा पद्मयोनिना ।
बृहस्पतिस्तदा देवं दैवैः सेन्द्रैः प्रणम्य च ।। 24

मेरोः शिखरमासाद्य स्मरं सस्मार सुव्रतः ।
स्मरणादेव जीवस्य स्मरोऽपि सह भार्यया ।। 25

रत्या समं समागत्य नमस्कृत्वा कृताञ्जलिः ।
सशक्रमाह तं जीवं गतजीवो द्विजोत्तमाः ।। 26

स्मृतोऽहं भवता जीव न हन्तव्यो बृहस्पते ।
देवैः सेन्द्रैरशेषैश्च स्मृत एव नचान्यथा ।। 27

गत्वा तदाश्रमं शम्भोस्तया रत्या महाबलः ।
वसन्तेन सहायेन देवं योक्तुमनाभवत् (?) 28

ततः सम्प्रेक्ष्य मदनं स च देवस्त्रियम्बकः ।
स तृतीयेन नेत्रेण मदनं समुदैक्षत ।। 29

ततोऽस्य नेत्रजो वह्निर्मदनं पार्श्वतःस्थितम् ।
अदहत्तत्क्षणादेव व्यलपत्करुणं रतिः ।। 30

रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः ।
घृणया परया प्राह कामपत्नीं निरीक्ष्य च ।। 31

यदा विष्णुश्च भविता वसुदेवसुतः शुभे
शापाद्भृगोर्महातेजाः सर्वलोकहिताय वै ।। 32

यदा तस्याः सुतो यः स्यात् स पतिस्ते भविष्यति ।
प्रणम्य च तदा रुद्रं कामपत्नी शुचिस्मिता ।। 33

जगाम मदनं लब्ध्वा वसन्तेन वरानना ।। 34

**स्कन्द उवाच -**

सतीकान्तचित्तं प्रलोब्धुं वसन्तो
मुदा तत्र चक्रे वनं तत्सुकान्तम् ।

गिरौ मन्दरे मन्दिराभे शिवस्य
कुन्दारविन्दादिसुभैः प्रकामम् ।। 35

प्रभाकरकरस्फुरत्कमलकोशलीनालयः
परागरसरञ्जिताः परिपतन्ति पुष्पद्रुमान् ।
पलाशकुसुमावलीमिव शुकास्यभागे तदा
शुका अपि मुखागतान् विगलयन्ति जम्बूमिव ।। 36

पुरण्टकुटजावली विधृतपुष्पसत्कोरकैः
शमीकुसुमपाटलीपटलगन्धबन्धानिलैः ।
सुबिल्वकुसुमोत्करप्रभवगन्धसन्मेदुरो
विभाति किल मन्दरः कुसुमशाखिसच्छेखरः ।। 37

सुमन्दरसरोवरप्रथिततीरमन्दारजैः
विकासितसुमोद्गतैर्विमलवातगन्धायितैः ।
सुपर्णसुमगुच्छकैर्वरसुकर्णिकारोद्भवैः
कनत्कनकपुष्पवच्छिखरमत्र भाभाति वै ।। 38

क्रौञ्चाक्रान्तबकोरुपक्षचलनैर्लीनाश्चमीनाश्च ते
सारस्याः सरसीरुहेषु मधुपाः श्राम्यन्ति भ्राम्यन्त्यपि ।
एवं तत्सुमगन्ध गन्धितवनं दृष्ट्वा प्रहृष्टो हरः ।। 39

रतिपतिरतिलाघवेन शम्भुं
हृदये संबिभेदेऽथ पुष्पबाणैः ।

कुसुमेषुं कुसुमावलीढदेहं
यमघोरान्धकशासनो ददर्श ।। 40

अनलाक्षिकोणलक्ष्यमीशो
गरकण्ठो व्यदधादनङ्गसंज्ञमेनम् ।
भस्मीभूतमनङ्ग सुन्दरतनुं दृष्ट्वैव तत्पृष्ठगाव
सास्राक्षी रतिरीशमस्तुवदसौ शोकाकुलोत्कण्ठिता ।।41

**रतिरुवाच -**

हे वासुदेवनयनर्चित कामदेव भस्माङ्गराग वरभूषित
वामदेव ।
श्रीवामदेव्यमरतोषित भूमिदेव पूज्य प्रसीद
परमेश्वर देव देव ।। 42

महादेव देवाधिदेव प्रसीद
प्रसीद प्रसीद प्रभो कालकाल ।
पत्या विहीनां कृपापारसिन्धो
पत्या सनाथां कुरुष्वेश मां त्वम् ।। 43

विभौ मारसर्वस्वमप्यन्तरङ्गं
सदा खर्वगर्वाधिरूढं प्रमूढम् ।
मृडानीपते गूढपाद् भूषयोषा-
विशेषाङ्ग कामाङ्गनाश प्रसीद ।। 44

**सूत उवाच -**

सत्याः स्तुत्या च तुष्टो गिरिवरशिखरे सत्यवाचा विहृत्य
पातिव्रत्यानुभूत्या स किल पुरहरस्तामनङ्गेन योज्याम् ।
काले देव्याः कटाक्षैस्तव पतिरमरो जायते इत्यशात्तां
शान्तां कान्तप्रदानाद्गिरिशवरकृपापात्रभूतां रतिं ताम् ।।

देवास्ते प्रययुः सभीतिहृदयास्ते कान्दिशीकाः प्रभोः
क्रोधान्धीकृतलोचनस्य पुरतः स्थातुं न शेकुस्तदा ।
इन्द्राग्नी यमनिर्ऋती च वरुणः सोमार्यमाद्याः ययुः
प्रख्यातुं वरमन्मथाङ्गदहनं देवेन तद्ब्रह्मणे ।। 46

।। इति श्रीशिवरहस्ये द्वादशाम्शे
मन्मथदाहो नाम
एकादशोऽध्यायः ।।



## ।। द्वादशोऽध्यायः ।।

**स्कन्द उवाच -**

ययुरिन्द्रादयो देवा ब्रह्मलोकं सनातनम् ।
सौवर्णवर्णसम्बाधं प्राकारवरगोपुरम् ।। 1

पुष्पकल्पकवृक्षाढ्यं प्रोद्धूतसुपताककम् ।
रत्नागारमहाकुम्भसङ्घभासुरमुत्कटम् ।। 2

पुष्पगन्धादिबहलं धूपदीपविदीपितम् .
तत्र सत्ये सुरा लोके आलोकन्त पितामहम् ।। 3

ब्रह्मेश्वरालये तत्र वज्रागारमनोरमम् (मे) ।
कनत्कनककुम्भाग्रे नानावृक्षवराश्रये ।। 4

धूपिते दीपिते शम्भोरालये कमलालयः ।
वैखानसैर्वालखिल्यैर्मुनिभिः संवृतस्तदा ।। 5

गायत्र्या चैव सावित्र्या संवृतः पार्श्वयोर्द्वयोः ।
वेदान्तनिष्ठैर्यतिभिः संवृतो भस्मभूषितैः ।। 6

पञ्चास्यध्याननिरतश्चतुर्वक्त्रः प्रजापतिः ।
करङ्कविलसद्धस्तो भस्मदिव्यत्रिपुण्ड्रकः ।। 7

रुद्राक्षरत्नाभरणः पूजयन् शङ्करं स्थितः ।
स्वच्छैर्बिल्वैर्महादेवं ब्रह्मेशं सत्यलोकगम् ।। 8

स्तुवन्तं देवदेवेशं चतुर्वक्त्रं प्रजापतिम् ।। 9

**ब्रह्मोवाच -**

शम्भो त्वं कनकाद्रिचापशरधिर्वाहीकृताम्नायकः
पाहीश क्षितिसुन्दरोत्तमरथ श्रीशोऽथ जिष्णुःशरः ।
मौर्वी चोरगपुङ्गवस्तव वरे चक्रे च केन्द्रत्तमे
लक्ष्यं ते त्रिपुरं सुरा भटगणाः कस्ते नमस्ते समः ।। 10

तादृशं तत्र ब्रह्माणं ददृशुस्त्रिदशास्तदा ।
प्रणम्य तत्र ते देवा ब्रह्माणं प्रोचुरत्र हि ।। 11

**सुरा ऊचुः -**

नमस्ते भगवन् ब्रह्मन् सुरास्तारकपीडिताः ।
सम्मन्त्र्य च महादेवं तपस्यभिरतं तथा ।। 12

गुरुणा मन्मथं योज्य रत्या साकं महेश्वरम् ।
हैमवत्या च संयोक्तुं भवमुग्रं कपर्दिनम् ।। 13

तदुद्भवं च सेनान्यं तारकासुरनाशने ।
प्रार्थयामीदृशं तत्र दृशा देवस्य भस्मासात् ।। 14

अभवन्मन्मथो ब्रह्मन् रत्या देवः प्रसादितः ।
तां कृपापात्रभूतां च त्रिणेत्रश्चाकरोद्विधे ।। 15

करवाम किमद्यात्र तारकेण निपीडिताः ।
प्रयाताः शरणं सर्वे त्वामेवाद्य पितामहम् ।। 16

उपायश्चिन्त्यतामत्र हरोद्वाहे प्रजापते ।
तदा देववचः श्रुत्वा विधिस्तत्र विचिन्त्य च ।। 17

उवाच सान्त्वयन्देवान् तारकं प्रति सांप्रतम्[1] ।

**ब्रह्मोवाच -**

मा भैष्ट यूयं विबुधास्त्रिविष्टप [2]विनाशिनः ।। 18

शिवः सर्वेश्वरो येन स्मरः स्मार्यतनुर्गतः ।
भवितव्यं तथैवात्र किमद्य करवाण्यहम् ।। 19

हैमवत्या महेशस्य उद्वाहे प्रयतामहे ।
तयोर्यः सम्भवेत्सूनुः स नस्तारकनाशकः ।। 20

तमेव सम्प्रसाद्यैव सेनापत्ये नियुञ्ज्महे ।
स तारकं मृधे हत्वा भोगं वः सम्प्रदास्यति ।। 21

इत्युक्त्वा त्रिदशैः सार्धं वैकुण्ठं प्रययौ विधिः ।
हंसमारुह्य रभसा शिवस्योद्वाहकर्मणे ।। 22

नानारत्नप्रभाभासि प्राकारवरगोपुरम् ।
रत्नमण्टपसम्बाधं दिव्योत्तुङ्गवृषाश्रितम् ।। 23

इन्द्रनीलमणिज्योतिर्लिङ्गं बिल्वेश्वराभिधम् ।
पूजयन्तं महालक्ष्म्या सर्वदा वरिवस्यया ।। 24

बिल्वपत्रैः सकल्हारैः कमलोत्पलपाटलैः ।
धूपैर्दीपैश्च नैवेद्यैर्नीराजनमनोहरैः ।। 25

---

1. युक्तं वचनमुवाच ।
2. त्रिविष्टपविनाशिनः तारकसुरात् मा भैष्टेति ।

स्तुवन्तं स्तुतिभिर्देवं विष्णुं कमललोचनम् ।
भस्मत्रिपुण्ड्रफालं तं फाललोचनपूजकम् ।। 26

धृतरुद्राक्षहाराढ्यं पीतकौशेयवाससम् ।
ददृशुस्ते सुरा विष्णुं स्तुवन्तं परमेश्वरम् ।। 27

**विष्णुरुवाच -**

गङ्गाचन्द्रललामधाम भगवन् हैमागबाणासन
भूमा त्वं खसमीरवह्निजलभूसृष्टिस्थितिग्रासकः ।
शर्व त्वं हरिसायकः क्षितिरथो वाहीकृताम्नायकः
सर्वेषां च पुमर्थदोऽसि कृपया मां पाहि साम्ब प्रभो ।।

इत्थं स्तुवन्तं ददृशुर्हरिं विधिमुखाः सुराः ।
तान् दृष्ट्वा स तदा विष्णुः समुत्थाय विधिं तदा ।। 29

स्वासने चोपसंवेश्य देवान् हेमासनेषु च ।
उपवेश्यार्हयाञ्चक्रे गन्धपुष्पादिभिस्तदा ।। 30

शिवनैवेद्यशेषेण विधिमाभोज्य सत्तमः ।
उवाच वचनं देवान् ब्रह्मेन्द्रप्रमुखान् हरिः ।। 31

**हरिः उवाच -**

कुतः समागमः सर्वैः किं वः कार्यमुपस्थितम् ।
शूलपाणिं स्मरन् चित्ते करवाणि किमत्र वः ।। 32

तदा विष्णुवचः श्रुत्वा विबुधा अब्रुवन् वचः ।
तारकासुरसङ्ग्रामे स्मारयन्तः पराभवम् ।। 33

सुरा ऊचुः -

सङ्गत्य सर्वे विबुधा वयं स्मरयुता हरम् ।
गता योक्तुं महादेवं हिमशैलेन्द्रकन्यया ।। 34

तपस्यभिरतं देवमूर्ध्वरेतसमीश्वम् ।
स्मरोऽपि देवकार्यार्थमुद्युक्तो भस्मसात्कृतः ।। 35

तस्यां जातं महादेव्यां तदुत्पन्नं सुरोत्तमम् ।
सेनापत्ये नियोज्यैव भवाम विगतज्वराः ।। 36

यदत्र कार्यमुचितं तच्छीघ्रं संविधीयताम् ।
तदा देववचः श्रुत्वा साश्रुनेत्रोऽभवद्धरिः ।। 37

मन्मथं तं तथा नष्टं ज्ञात्वा पुत्रं दृशेशितुः ।
लक्ष्म्या दुःखमवापायं हरिर्वै पुत्रकारणात् ।। 38

उवाच च तदा देवान् किं कृतं स्वार्थलिप्सुभिः ।
नियोज्यो हि प्रसाद्यैव हैमवत्या महेश्वरः ।। 39

सिह्मस्य पुरतो देवा नियुक्तो हरिणार्भकः ।
तस्यात्र नखराघातं स्मरः किं प्रसहिष्यति ।। 40

रत्या प्रसादितस्तत्रमहादेवस्तदा हरे ।
इति श्रुत्वा देववाचं हर्षं लेभे हरिस्तदा ।। 41

हैमवत्या समेष्यामि तत्कटाक्षेण तोषितः ।
सर्वेषामप्यनङ्गोऽयं त्वयि साङ्गोऽस्तु मा शुचः ।। 42

इत्युक्त्वा प्रैषयत्तत्र महादेवस्तदा हरे ।
स तच्छ्रुत्वा देववाचं हर्षं लेभे हरिस्तदा ।। 43

ब्रह्मणा चाथ सङ्गम्य देवोद्वाहाय तत्र वै ।
तारकस्य विनाशार्थं देवानां च तथा मुदे ।। 44

पुनः स्मरोज्जीवनार्थं उद्वाहार्थं तथेशितुः ।
नारदं च समाहूय प्रैषयद्धिमभूधरम् ।। 45

**हरिरुवाच -**

नारदागच्छ भद्रं ते याहि त्वं हिमभूधरम् ।
तपस्यन्तीं महादेवीं केदारेशार्चने रताम् ।। 46

प्रदेहि देवदेवाय महादेवाय शम्भवे ।
तेन ते कुलमुत्कृष्टं भवेद्गिरिवरेषु च ।। 47

प्रयाम सर्वदेवैश्च तवैव शिखरं गिरे ।
तदत्र संविधत्स्वाशु अमुना विश्वकर्मणा ।। 48

विश्वकर्माणमाहूय विष्णुर्वचनमब्रवीत् ।

**विष्णुरुवाच -**

विश्वकर्मन् हिमगिरिं नारदेन व्रजाधुना ।। 49

तत्र तच्छिखरे रम्ये हरस्योद्वाहसम्भ्रमे ।
सुराणां भूसुराणां च प्रमथानां महात्मनाम् ।। 50

असम्बाधं सुविस्तीर्णं नानारत्नैकभासुरम् ।
मण्टपालिं कुरुष्वाथ नानाविभवविस्तरम् ।। 51

भक्ष्यभोज्यान्नसहितं फलमूलजलावृतम् ।
सिह्मासनं महेशस्य स्वयंवरकृतासनम् ।। 52

मणिभिः खचितं तत्र मुक्तामालापरिष्कृतम् ।
सुगन्धिपुष्पमालाढ्यं अम्लानालम्बिपङ्कजैः ।। 53

पताकाकुम्भसहितं वितानोत्तानिताम्बरम् ।
मणिदीपैस्तथा धूपैः कुथास्तीर्णोपधानकैः ।। 54

कुरु त्वं देवदेवस्य उद्वाहोचितमादरात् ।
अनल्पशिल्पसहितं शिल्पिभिस्त्वं व्रजाधुना ।। 55

स विश्वकर्मा वचनान्नारदेन ययौ द्रुतम् ।
नत्वा विष्णुविधी देवान् शिवार्पितहृदन्तरः ।। 56

सङ्गतो गिरिराजानं तौ तेनाप्यर्चितौ तदा ।
प्रीतिमीयतुरुद्युक्तौ वाचं तावूचतुर्गिरिम् ।। 57

**नारदविश्वकर्माणौ (ऊचतुः)**

ब्रह्मविष्ण्वादिभिर्देवैराज्ञप्तौ त्वां समागतौ ।
देवदेवाय देवीं तां दत्वा भूधरसत्तम ।। 58

त्वं कृतार्थी कुरु क्षिप्रभात्मानं गिरिभिः सह ।
धन्यो मान्योऽसि गिरिश शर्वाय त्वं महेश्वरीम् ।। 59

त्रिणेत्रपात्रमुत्कृष्टं कन्यां धन्यां प्रपादय ।
यत्पादपङ्कजप्रीत्यै दानानि कुरुते नरः ।। 60

तमेव शरणं याहि गिरे देव्याः प्रदानतः ।
कारणं त्वं निमित्तं च सा माया स पुमान् हरः ।। 61

ययोर्जातमिदं विश्वं त्रैलोक्यं सचराचरम् ।
सुराणां वचनेनैवमावाभ्यां प्रोक्तमेव ते ।। 62

त्वदीये शिखरे चारुचित्रमण्टपगोपुरम् ।
निर्मातुमहमिच्छामि देवोद्वाहाय मङ्गलम् ।। 63

समाज्ञापय शैलेश द्रुतं देववचो यथा ।
स विश्वनारदोक्तवचसा हर्षितो नगः ।। 64

प्राह प्राञ्जलिरेवेत्थं तदा स गिरिराण्मुदा ।

**शैलेश्वरः उवाच -**

धन्योऽहं सर्वमान्योऽहं देवानां वचनं यथा ।। 65

ददामि कन्यां देवाय महादेवाय शम्भवे ।
कारणं लोकवादेऽत्र सैव देवी सनातनी ।। 66

माया सा पुरुषो देवो महादेवो महेश्वरः ।
यदत्र संविधातव्यं देवोद्वाहनकर्मणि ।। 67

विश्वकर्मन्नमस्तेऽस्तु तत्कुरुष्वाविचारितम् ।
गच्छ नारद भद्रं ते देवेषु ब्रूहि माचिरम् ।। 68

देवदेवेन यान्त्वद्य प्रसाद्य परमेश्वरम् ।
समायान्तु सुराः सर्वे मुनयो देवपत्निभिः ।। 69

गणेशैश्च महेशस्य यान्त्वद्य सचराचरम् ।। 70

स नारदो गिरिवचनेन देवान्
समाययौ वचनमुदारवाक्ततः ।
अथाब्रवीत् धन्यमुदारवाचं
ददाति कन्यां भवतां च वाक्यतः ।। 71

मुदा महेशाय स मेनया गिरिः
मैनाकयुक्तः प्रविनीतचेतसा ।
प्रसाद्य देवं तपसि स्थितं सुरा
व्रजन्तु सर्वे विबुधाश्च मा चिरम् ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
शिवोद्वाहसमारम्भो नाम
द्वादशोऽध्यायः ।।



## ।। त्रयोदशोऽध्यायः ।।

**स्कन्द उवाच -**

तदा हिमवतो मौलौ शिवोद्वाहोचितं शुभम् ।
प्रागुदक्प्रवणं तत्र शिखरं चारु भूतलम् ।। 1

निर्ममेऽसावमेयात्मा दशसाहस्रयोजनम् ।
नानाशिल्पयुतं तत्र प्राकारवरमण्टपम् ।। 2

गोपुराट्टालकोपेतं सौधपङ्क्तिविभूषितम् ।
क्वचिद्रत्नप्रभाजालं क्वचिद्विद्रुमकुट्टिमम् ।। 3

क्वचिन्मरकतच्छायं क्वचिद्गोमेदसुन्दरम् ।
हीरावृतमणिद्वारं गारुत्मत्कलितान्तरम् ।। 4

क्वचिद्वैडूर्यखचितमण्टपादितलैर्युतम् ।
क्वचिन्नीलमणिभ्राजत्तलं रम्यसुवेदिकम् ।। 5

क्वचित्पुष्पकरागादिमणिमण्टपभूषितम् ।
क्वचिन्मुक्तावितानाढ्यं सर्वर्तुकुसमोज्ज्वलम् ।। 6

पद्मरागमहारागयुतं च मणिवेदिकम् ।
अखण्डवरमाणिक्यसरावलिविभूषितम् ।। 7

क्वचिच्छङ्खाच्छधवलं प्रवाललिलतं क्वचित् ।
पट्टाम्बरवितानाढ्यं चलच्चामरभूषितम् ।। 8

वरहेममहाचित्रचित्रितं त्रिदिवाधिकम् ।
इन्द्रगोपकसङ्काशतलकुट्टिमभूषितम् ।। 9

रम्यानन्तमहाद्वारगवाक्षवलभीयुतम् ।
पर्यन्तप्रच्छदपटैर्भूषितं मणिचित्रितम् ।। 10

इन्द्रचापनिभैर्गेहैर्निचितं मणिकान्तिभिः ।
धूपधूमादिबहुलं गन्धसिक्ताम्बुरूषितम् ।। 11

कमलोत्पलमालाढ्यं फुल्लहल्लकशोभितम् ।
कदम्बकुन्दकुमुदमल्लीमालाविराजितम् ।। 12

अम्लानकेतकीपुष्पैरालोलैर्भूषितान्तरम् ।
दमनोशीररुचिरवितानाच्छादिताम्बरम् ।। 13

मातुलिङ्गाम्रपनसकदलीनारिकेलकैः ।
नारङ्गपूगनिम्बालिखर्जूरफलगुच्छकैः ।। 14

मालिकाललितात्यच्छपङ्क्तिभिः शोभितान्तरैः ।
स्वर्णपट्टैस्तथालोलैर्भूषितं मणिमण्टपैः ।। 15

स्वच्छादर्शोरुफलकैः कीलितं मणिमौक्तिकैः ।
मुक्तागुच्छसरालोलरत्नपङ्कजशोभितैः ।। 16

शार्दूलचमरोद्दामपुच्छचामरकीलनैः ।
वीजितैः पुरुषाकारचलहस्तोरुवीजनैः ।। 17

मयूरपिच्छककृतै(त) व्यजनद्योतिसत्करैः ।
पुरुषैर्नवरत्नाढ्यभूषणाभूषिताङ्गकैः ।। 18

अकृत्रिममिवाभाति निर्मितं विश्वकर्मणा ।
देवानां निलयैस्तत्र भूतानां निलयैरपि ।। 19

मुनीनामाश्रमैश्चापि श्रमहारिसरोवरैः ।
तीरसम्बद्धसोपानैः फुल्लपद्मविराजितैः ।। 20

तत्तीरविस्तृतापारस्तम्भमण्टपभासुरैः ।
भूसुराणां च शरणैः स्वच्छोदैर्हल्लकादिभिः ।। 21

हेममीनकच्छपैश्च युतैः सारसपङ्क्तिभिः ।
हंसपक्षालिचलनैर्व्याधूताब्जैर्मनोहरैः ।। 22

ब्रह्मविष्ण्वादिदेवानामिन्द्रादिमरुतामपि ।
निवासैः श्रीनिवासैश्च तत्तल्लोकाधिकैस्तथा ।। 23

भक्ष्यभोज्यान्नबहूलैर्वासोऽलङ्कारसंयुतैः ।
निचितैर्मणिमाणिक्यैः स्वच्छोदैश्च सरोवरैः ।। 24

देवाङ्गनाविहारैश्च भ्रमद्गृहवरैरपि ।
शीकरासारकुम्भैश्च सभामध्यविराजितैः ।। 25

भ्रंमद्दीपगृहैश्चित्रैर्वितानालम्बितैस्तथा ।
धूपवृक्षैर्दीपवृक्षैर्भूषणैर्मणिपङ्क्तिभिः ।। 26

गणानां पुण्यनिलयैरसम्बाधैर्विभूषितम् ।
सहस्रयोजनोत्सेधे मण्टपैर्विस्तृते तदा ।। 27

नवरत्नप्रभाजालैर्भूषितैस्तप्तकाञ्चनैः ।
खचिते कुट्टिमतले सर्वचित्रविचित्रिते ।। 28

देवदानवगन्धर्वयक्षराक्षसमूर्तिभिः ।
महेशमूर्तिभिः पञ्चविंशत्या मणिचित्रितैः ।। 29

विचित्रितगवाक्षैश्च समुत्कीर्णैरिवावृतैः ।
विस्तृतैर्मणिसोपानवेदिकासमलङ्कृतैः ।। 30

मयूरहंससारङ्गवृकव्याघ्रपतङ्गजैः ।
व्यालिपालीमयूरालीशरभावलिभूषितैः ।। 31

स्तम्भैः कुम्भैश्च भाभाति धूपैर्दीपैर्मणीन्द्रजैः ।
उत्फुल्लारक्तकमलमालाभिः शोभितान्तरम् ।। 32

वितानप्रच्छदपटमुक्तागुच्छालिलम्बितम् ।
देवसिह्मांसनैर्हैमैर्मणिमाणिक्यभूषितैः ।। 33

पराघ्यास्तरणास्तीर्णैर्विस्तीर्णैः पटकान्तिभिः ।
तन्मध्ये वेदिका रम्या नानामणिविचित्रिता ।। 34

पताकाग्रमहाकुम्भं पुण्यसौधं मनोहरम् ।
स्वच्छादर्शतलच्छन्नं पुष्पमालापरीवृतम् ।। 35

दमनोशीरजाजीभिः पद्मचम्पकसंयुतैः ।
मणिमालादिनिचितं आपीठालम्बिसुन्दरम् ।। 36

पताकाभिर्वितानैश्च शोभितं धूपितं सदा ।
फलपल्लवपत्रैश्च दूर्वालाजाक्षतैर्युतैः ।। 37

गन्धचन्दनपात्रैश्च पूर्णकुम्भालितोरणैः ।
पल्लवोर्ध्वमुखैस्तत्र कदलीस्तम्भभूषितैः ।। 38

रम्भैरयुतसाहस्रैर्मणितोरणभूषितैः ।
कुम्भ्यः करम्भ्यपात्र्यश्च सौवर्णपरिकल्पिताः ।। 39

भक्ष्यभोज्यान्नगिरयः फलाद्रिवरकल्पनैः ।
शाकसूपापूपयुतराशीनां नियुतैरपि ।। 40

खाद्यानां चैव मांसानां राशयः स्म प्रदृश्यते । (?)
घृतपायसनद्यश्च प्रवहन्ति मधुस्रवाः ।। 41

शर्कराराशयस्तत्र दृश्यन्ते स्म नगोपमाः ।
दधिक्षीरवहा नद्यो वहन्ति सरितो यथा ।। 42

मोदका वटकापूपपूरिकाफेणिमण्डिकाः ।
गिरिरूपाः प्रदृश्यन्ते गन्धानां गिरयस्तथा ।। 43

पुष्पताम्बूलपूगानां गिरयः कल्कसंयुताः ।
मुक्ताचूर्णोरुगिरयः पटवाससुवालुकाः ।। 44

कल्पिता मनसा तेन शङ्करोद्वाहहेतवे ।
नृत्यन्त्यप्सरसस्तत्र तालरागलयानुगम् ।। 45

गायन्ति रुद्रवीणाभिर्गन्धर्वाश्चारुमूर्तयः ।
पुलोमजा विप्रचित्तिर्मेनका सहजन्यका ।। 46

अलम्बुसा मिश्रकेशी घृताची च तिलोत्तमा ।
नृत्यान्ति तत्र सदसि स्तुवन्ति किल चारणाः ।। 47

शिवापदानविजयं गन्धर्वा ललितं जगुः ।
वेदा मूर्तास्तदा तस्थू रुद्राञ्जेपुद्विजैः सह ।। 48

स्वाहाकारवषट्कारौ स्तुवन्तः परमेश्वरम् .
वसवो मरुतस्तत्र सूदा आसन् सदैवतैः ।। 49

मरुतः परिवेष्टारो विवाहो(हः)शङ्करस्य हि ।
रुद्रा गन्धकरास्तत्र सञ्चरन्त्यर्चने रताः ।। 50

सर्वेषां द्वादशादित्या फलताम्बूलदायकाः ।
पुष्पमालाकरा आसन् विश्वेदेवाः सहस्रशः ।। 51

मातरः पितरस्तत्र नियुक्ताः परिवेषणे ।
पटवासकरावास्तां भिषजौ तत्र संसदि ।। 52

पात्रप्रयोजका आसन् ऋभवः स्वर्णभाजनैः ।
गन्धाक्षतप्रदातारः सुधन्वानस्तदाज्ञया ।। 53

प्रतिपात्रं प्रतिसुरं भक्ष्यभोज्यान्नराशिभिः ।
पानीयफलदानैश्च पूजयन्ति गणेश्वराः ।। 54

नन्द्याद्या वीरभद्राद्या विष्णुब्रह्मादयोऽपि च ।
वस्त्राभरणदाने च गिरीणां पूजने तथा ।। 55

नियुक्ताः श्रीमहेशेन गीतवाद्योरुनर्तने ।
विद्याधराप्सरःसिद्धाः साध्या मन्वन्तरा ग्रहाः ।। 56

नक्षत्राणि तथा वायुर्यमो निर्ऋतिरेव च ।
वरुणो धनपो दिक्पा द्विजानामर्चने रताः ।। 57

भक्ष्ये भोज्ये च पेये च गन्धपुष्पनिवेदने ।
त्रिषष्टिकोटिमुनयो रुक्मपात्रीषु भुञ्जते ।। 58

भैरवा नवकोट्योऽथ योगिन्यो दशकोटिकाः ।
रुद्रा गणास्तथैकोनपञ्चाशत्कोटिसङ्ख्यया ।। 59

चामुण्डा कोटिरेवैका दैत्यदानवकोटयः ।
त्रिंशत्त्रिकोटिर्देवानां गन्धर्वाप्सरकोटिकम् ।। 60

दानमानार्हणा भोज्यं भोजयन्तः स्म आसते ।
श्रीमहेशमहागौर्योस्तदा वैवाहिके विधौ ।। 61

शय्या गन्धफलैः पुष्पैर्भोगैः सम्पूज्य सर्वशः ।।

एवं विश्वैककर्मा सकलदिविषदां श्रीमहेशाज्ञयासौ
भक्ष्यैर्भोज्यैर्वरान्नैः श्रुतिसुखनिरतैर्गानधाराविशेषैः ।
कृत्वा नत्वा मुदा तं हरिममरवरं प्राप्य विज्ञाप्य सर्वं
सौधालि गिरिशेखरेऽत्र विहितां निर्माय मुक्तोऽभवत् ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
विश्वकर्मनिर्माणं नाम
त्रयोदशोऽध्यायः ।।



## ।। चतुर्दशोऽध्यायः ।।

**स्कन्द उवाच -**

[1]अवश्यायो गिरिवरोऽप्यपश्यत्परमाद्भुतम् ।
निर्मितं मण्टपं दिव्यं स्वर्गादपि मनोहरम् ।। 1

देवोद्वाहे त्वरायुक्तो मेनया हिमभूधरः ।
नाकिप्रभं तं मैनाकं उवाच पुरतः स्थितम् ।। 2

**हिमवानुवाच -**

मैनाकागच्छ भद्रं ते पर्वतानानय द्रुतम् ।
पत्नीभिः सहितान् सर्वान् गौर्युद्वाहं वदाद्य तान् ।। 3

[2]यत्तेषु रत्नं मांसादि फलमूलमधुस्रवम् ।
चन्दनागरुपुष्पाणि तैः समानय मा चिरम् ।। 4

गिरिराजाज्ञया तत्र मैनाकः स्वगणैर्युतः ।
विमानेन ययौ तत्र गन्धपुष्पविभूषितः ।। 5

पर्वतान् प्रत्ययात्तत्र तेषु प्रोच्याथ मङ्गलम् ।
तैश्च सम्पूजितोऽभ्यायाद्विमानैरर्कसन्निभैः ।। 6

मेरुमन्दरकैलासहेमकूटाद्रिनीलकाः ।
शतशृङ्गो रैवतश्च निषधो गन्धमादनः ।। 7

---

1. अवश्यायो हिमे गर्वे (अवश्यायाचलेन्द्रोऽपि) ।

2. तन्निकटे यद्यत् रत्नादिकं वर्तते तत् तत् ते यथा यथाशीघ्रं समानयन्ति तथाविधमुपायं कुरु इति भावेन तथोक्तम् ।

कुमुदः पनसो रैभ्यस्त्रिकूटश्चित्रकूटकः ।
कलिङ्गो दुन्दुभिः सह्यो दर्दरो विन्ध्य एव च ।। 8

पारियात्रश्च कुमुदो दरानान्वेगवांस्तथा ।
महेन्द्रो मलयो गौर उदयास्तमयाचलौ ।। 9

वर्वरो द्योडकोदण्डः ककुभः पद्म एव च ।
शेषाचलश्च श्रीशैलः कदम्बो बंभरो महान् ।। 10

एते प्राधान्यतः शैला अन्ये चापि महीधराः ।
मधुमैरेयमुत्कृष्टं गन्धचन्दनदारु च ।। 11

ऐणेयमत्स्य मांसादि शुष्कमार्द्रं च पर्वताः ।
गजाश्वगोगणांस्तत्र सारङ्गांश्च शुनस्तथा ।। 12

एलालवङ्गकर्पूरं सप्तच्छद भवं शुभम् ।
तथा मृगमदं चित्रं कस्तूरीचामराण्यपि ।। 13

मनः शिलाधातुरसं निशाकुङ्कुमरोचनाः ।
जातीपत्रफलं चैव हैमरौप्यं च मौक्तिकम् ।। 14

मणिवज्रप्रवालांश्च पुष्परागविद्रूरकैः ।
गोमेदनीलमाणिक्यवासोभारैः सगस्रशः ।। 15

वरखादिरतक्कोलहिङ्गुसर्जरसं तथा ।
तगरागरुभारैश्च देवदारु भरैस्तथा ।। 16

पूगीफलैर्नारिकेलैः कदलीर्विविधास्तथा ।
पनसानां च गिरिभिः शर्करागुडमुत्कटम् ।। 17

ज्योतिष्मतीलतोद्भूतं तैलं च विविधं घृतम् ।
नारङ्गमातुलिङ्गालिमाम्रदाडिमपर्वतैः ।। 18

केतकीतालफलकैः पुष्पाणि सुरभीण्यपि ।
उपायनमुपाजह्रुर्गिरिराजविलोकने ।। 19

गौर्युद्वाहं समाकर्ण्य गिरयो हर्षनिर्भराः ।
सदारतनयास्तत्र मैनाकेनाययुर्द्रुतम् ।। 20

विमानादवरुह्याथ गिरिराजं प्रणम्य ते ।
ऊचुः प्राञ्जलयः सर्वे गिरयो गिरिनायकम् ।। 21

**पर्वता ऊचुः -**

गिरिराज नमस्तेऽस्तु मैनाकेन सहागताः ।
अपर्णायाः समुद्वाहं श्रुत्वा पूर्णमनोरथाः ।। 22

तूर्णं वयं समायाताः सदारतनया गिरे ।
धन्या वयं सर्वमान्या भविष्यामोऽद्य सङ्गताः ।। 23

सम्बन्धेन महेशस्य गिरिशस्य त्वया सह ।
मैनाकेन समायतास्त्वदाज्ञाकारिणो वयम् ।। 24

फलमूलं च विपुलं वासोरत्नभरादिकम् ।
विलोकय गिरिश्रेष्ठ यदस्माभिः समाहृतम् ।। 25

इति तत्पुरतो न्यस्य प्रणेमुर्धरणीधराः ।
तेषां वचनमानेन हर्षादाह गिरीश्वरः ।। 26

हिमवानुवाच -

धन्या यूयं सदा मान्या वचनान्मे समागताः ।
भवद्भिः साकमीशानं समभ्यर्च्य सुरोत्तमान् ।। 27

गणश्रेष्ठानपि नगा वैवाहिकसुमङ्गलम् ।
भोक्तुमिच्छामि सुभगाः सदारतनयैरहम् ।। 28

अतन्द्रिताश्च सकलं कुर्वन्तूद्वाहकर्मणि ।
मेरो त्वमेभिर्गिरिभिः सुरासुरसमर्चनैः ।। 29

अतन्द्रो भव निर्निद्रः सम्भारालोकनोद्यतः ।
मन्दरागच्छ भद्रं ते त्वं विन्ध्यात्र गृहे वस ।। 30

यदत्रानन्तरं कार्यं कुरु क्षिप्रमतन्द्रितः ।
समायास्यति देवेशो गौर्युद्वाहाय चामरैः ।। 31

गणेन्द्रैर्मुनिभिः सार्धं तत्पूजानिरतो भव ।
फलमूलासनैः पाद्यैर्गन्धपुष्पनिवेदनैः ।। 32

पारियात्र समागच्छ भक्ष्यभोज्येषु सादरम् ।
पर्वतैः सहितोऽद्यैव सुराणां परिवेषकः ।। 33

नृत्तवाद्येषु पानीये ताम्बूलानां निवेदने ।
सुरेषु गणवर्येषु मुनिष्वपि सदा मुदा ।। 34

यावदिच्छं प्रदेह्याशु अत्रमाऽतन्द्रितो भव ।
दर्दरातन्द्रितो भूत्वा वसेह प्रतिपालय ।। 35

भवत्सु न्यस्तभारोऽस्मि मैनाकेन सुखं वसे ।
कुमुदो वस्त्रभूषाणां प्रदाने निरतो भवेत् ।। 36

पर्वतेन्द्राङ्गनाः सर्वा मेनया सह सादरम् ।
वैवाहिकेऽत्र कन्याया मङ्गलाचरणे रताः ।। 37

वस्त्राभरणपुष्पैश्च गन्धैश्चापि विभूषिताः ।
भक्ष्यभोज्यैरर्चयन्तु शिवं सुरगणैर्द्विजैः ।। 38

नैवाज्ञाप्रसरः कार्यो भवद्भिर्मेऽविचारितम् ।
कर्तव्यं सावधानेन नाविस्रब्धेन चेतसा ।। 39

*नवनीतैः सदा भाव्यमभव्याङ्गैः कदाचन ।
मेना मेने च स्वात्मानं पर्वतेन्द्राङ्गनावृताम् ।। 40

ताः संविभज्य सा देवी वस्त्रालङ्कारभूषणैः ।
भक्ष्यभोज्याच्छपानीयगन्धपुष्पप्रदापनैः ।। 41

स्वपुत्रनिर्विशेषान् सा गिरीन् सन्तोष्य सुव्रता ।
पतिव्रता तदा मेना मङ्गलाचरणोद्यता ।। 42

ततश्च गिरिराट् तत्र कृतकौतुकमङ्गलम् ।
मैनाकमाह पुत्रं स्वं गिरीनानय मेऽन्तिकम् ।। 43

स्नातान्दिव्याम्बरधरान्गन्धस्रग्भूषयणैर्युतान् ।
सदारतनयानत्र विमानेन द्रुतं सुत ।। 44

---

* "नवनीतमानीयतामित्युच्यमाने, इदं घृतमेव गृह्यतामिति सर्वैः सर्वपदार्थसन्नद्धैः भाव्यम् । कदापि अभव्याङ्गैः न भाव्यम् क्षणं विलम्ब्यतां, अपेक्षितः पदार्थःसज्जीक्रियते इति कदापि न वक्तव्यं केनापि" इति हिमवदाशयोऽत्र वर्ण्यते इति भाति ।

स गिरेः स्वपितुर्वाक्यं नत्वा जग्राह सादरम् ।
गिरीन्द्रनचसा तत्र रिरीनाह तदा मुदा ।। 45

मैनाकः स तदा वाक्यं सुविनीतेन चेतसा ।

**मैनाक उवाच -**

गिरिराजं गिरिश्रेष्ठा द्रश्टुमिच्छथ सत्वरम् ।। 46

सदारतनयाः सर्वे वस्त्राभरणभूषिताः ।
*गौरीं चिरं तपःक्लिष्टां भवद्भिर्द्रष्टुमिच्छति ।। 47

इति मैनाकवचसा गिरयः सत्वरास्तदा ।
गन्धालङ्कारवासोभिः सदारतनयास्तदा ।। 48

भूषिता गिरिराजानमाययुस्ते प्रणम्य च ।
ऊचुः प्राञ्जलयः सर्वे किमत्र करवाम ते ।। 49

त्वदाज्ञयैव सर्वत्र विहितं सिद्धमेव ते ।
सर्वसम्पूर्णमेवात्र त्वयि शासति भूधरे ।। 50

न न्यूनं किञ्चिदेवात्र संविधानं तवौजसा ।
तदा तदाज्ञया सर्वे विमानमधिरुह्य ते ।। 53

मेनापि नगनारीभिः कृतकौतुकमङ्गला ।
सपर्वतेन्द्रमैनाका ययौ गौरीतपःस्थलीम् ।। 54

---

* गौरी शङ्करं पतिमभीप्सन्ती तपश्चरति इति ज्ञातमेव भवद्भिः । तामिदानीं तत्तपोवनं गत्वा गिरिराजः द्रष्टुमिच्छति । स च भवद्भिः सर्वैः सहैव गन्तुमिच्छति इत्यतः गिरिराजसन्निधौ उपस्थातव्यम् ।

सुमनोवर्षनिकरैर्गायद्गन्धर्वसत्तमैः ।
नृत्यदप्सरसां सङ्घैर्भेरीपटहनिःस्वनैः ।। 55

नीराजनकरैस्तत्र ययौ देवीं विलोकितुम् ।
नत्वा तपोवनं देव्या गिरिभिर्गिरिनायकः ।। 56

मेनया गिरिपत्नीभिस्तां अपश्यत्तपस्विनीम् ।
रूषितां रजसा तत्र जटिलालकसंयुताम् ।। 57

तामुत्थाप्य स्वकोत्सङ्गे सन्निवेश्य गिरीश्वरः ।
उवाच सान्त्वयन् गौरीं पर्वतैर्मेनया सह ।। 58

**हिमवानुवाच -**

चिरं क्लिष्टासि तपसा सफलास्ते मनोरथाः ।
नारदेन सुरैः प्रोक्तं *शिवस्यागमनं मम ।। 59

तवोद्वोहोऽत्र सुभगे मण्डयस्वात्मनस्तनुम् ।
इत्युक्ता पार्वती हृष्टा समाप्य नियमं वनात् ।। 60

तपोवनाङ्गनाः सर्वाःसन्तोष्य वरवाससा ।
निशागन्धैः कुङ्कुमैश्च गन्धपुष्पैः सदक्षिणम् ।। 61

मानयन्ती मुनिगणं हिमशैलकृताश्रमे ।
गोभिर्हिरण्यैर्वासोभिरभिपूज्य च सा तदा ।। 62

ततश्च नत्वा गिरिणा केदारं चाभिपूज्य च ।
गन्धमाल्यैर्बिल्वपत्रैः पञ्चामृतनिषेचनैः ।। 63

---

* शिवस्यागमनमधिकृत्य मम प्रोक्तम् ।

धूपैर्दीपावलीभिश्च खण्डकर्पूरकोज्ज्वलैः ।
नत्वा तुष्टाव हृष्टा सा मेनया भूधरेण च ।। 64

हर हर मुरजित्पप्रपूजिताङ्घ्रे
वरकाकोदरहार सोमचूड ।
गरकण्ठानलचारुनेत्र शम्भो
सदयं मामवलोकयाशु दीनाम् ।। 65

स्तुत्वा नत्वा च सा देवी केदारानुज्ञया शिवा ।
समर्प्य च तपस्तत्र मेनया सह निर्ययौ ।। 66

विचित्रमण्टपे तत्र रत्नसिह्मासनस्थिता ।
पर्वतेन्द्राङ्गना देव्यः परितस्तत्र आसते ।। 67

विशोध्य ता जटा देव्याः कङ्कतैरुत्किरन्त्यथ ।
गन्धतैलैस्तदा देवीं मेनया तां नगाङ्गनाः ।। 68

हरिद्रापटवासोदैः कोष्णैरेवाभिषिच्य ताम् ।
रजसा रूषितां देवीं चिरमभ्यज्य तां तदा ।। 69

तदङ्गजमलं तत्र पिण्डीचक्रुर्नगाङ्गनाः ।
अर्णापर्णवसनं तत्यजुर्गिरिपत्नयः (?)* ।। 70

खेलन्ती सा तदा देवी स्वाङ्गजातमलेन च ।
विधाय मूर्तिं रुचिरां गजास्यां गजकर्णिकाम् ।। 71

---

* अपर्णापर्णवसनं गिरिपत्न्योऽपनिन्यरे ।

भूषणैमुकुटेनैव कटस्रुतमदद्रवाम् ।
सम्प्रोक्ष्य जीव्य तां मूर्तिं पश्यन्तीनां च विस्मयम् ।। 72

उवाच गिरिजा तत्र दृष्ट्वा वरगजाननम् ।
पुत्रो मे भव देवेश विघ्नराजस्त्वमेव मे ।। 73

एष मे वरदानेन कृतः पुत्रो गजाननः ।
य एनं नार्चयन्ति न नमन्त्यपि ये सदा ।। 75

तेषां विघ्नप्रदोऽयं च भविष्यति न संशयः ।
इत्युक्त्वा सा तदा स्नात्वा मेनया सह सादरम् ।। 76

गन्धमाल्याम्बरैश्चित्रैर्भूषयित्वात्मनस्तनुम् ।
धम्मिल्लमल्लिविलसत्केतकीवरवेणिका ।। 77

रत्नग्रैवेयवलयैर्बाहुबन्धैर्मनोहरैः ।
तिलकाङ्कितसत्फाला सिन्दूरोत्कीर्णफालका ।। 78

काञ्चीकचितमध्या च रणन्नूपुरभासुरा ।
मुद्रिकाङ्गुष्ठवलयैः पादपद्मविभूषणैः ।। 79

अलक्ताऽऽरक्तपादाब्जा मेनयाऽभूत्तदाम्बिका ।
नीराज्य नगपत्न्यस्तां वरदीपैर्महेश्वरीम् ।। 80

बुभुजुः(?)भक्ष्यभोज्यैश्च केदारेशनिवेदितैः ।
सदारतनयाः सर्वे पर्वतेन्द्रेण पर्वताः ।। 81

ताम्बूलामोदिवक्त्राश्च गन्धपुष्पविभूषिताः ।
सुमुहूर्ते गिरिवराः विमानेनार्करोचिषा ।। 82

मेनया च तद देव्या पर्वतानां च [1]भामिनीः । (?)
नदत्सु देवतूर्येषु पुष्पोत्कीर्णतलेषु च ।। 83

नृत्यदप्सरसां सङ्घैः प्रययौ [2]सा गिरेर्गृहम् ।
भूधरेण गिरिव्रातैर्मण्डितं धूपितं मुदा ।। 84

रत्नतोरणसम्बाधं रङ्गवल्लीविराजितम् ।
कदलीवृक्षसंबाधं पूर्णकुम्भविराजितम् ।। 85

नीराजयन्ति गिरिजां वरपर्वतेन्द्र-
पत्न्यस्तदा प्रमुदिताः स्वगृहेषु तत्र ।
लाजान् किरन्ति सुमनोभिरतीव हृष्टा
गायन्ति तत्र मधुरं मुदितान्तरङ्गाः ।। 86

गिरेर्गह्वरं सा समासाद्य देवी
समेना ग्रीन्द्रेण मैनाकयुक्ता ।
गिरीन्द्रैरवारुह्य मोदाद्विवेशा-
लयं स्वं पितुस्तत्र भेरीरवैश्च ।। 87

स्थिरा लालिता भोगभोग्यैश्च पित्रा
गिरीन्द्रेण युक्ता तथा पर्वतेन्द्रैः ।
तथा सेविता पर्वतेन्द्राङ्गनाभिः
शिवा भक्ष्यभोज्यैस्सदास्ते स्म तुष्टा ।। 88

।। इति श्रीशिवरहस्ये द्वादशाम्शे देवी(गौरी)समागमनं नाम
चतुर्दशोऽध्यायः ।।



---

1. तथाङ्गनाः । तदाङ्गना इति वा । 2. प्रययुस्तद्गिरेर्गृहम् ।

## ।। पञ्चदशोऽध्यायः ।।

**स्कन्द उवाच -**

सुरा नारदवाक्येन सन्तुष्टा अभवंस्तदा ।
मण्टपानां च निर्माणं श्रुत्वा ते विश्वकर्मणा ।। 1

सम्मन्त्र्य गुरुणा देवा ब्रह्मविष्णुपुरोगमाः ।
ययुस्ते मन्दरगिरिं नानाद्रुमलतावृतम् ।। 2

अपश्यन्नाश्रमं शम्भोः प्रशान्तमृगसङ्कुलम् ।
सुपुष्पुततरुच्छायं गिरिनिर्झरभूषितम् ।। 3

क्वचित्ताम्रक्वचिन्नीलक्वचित्पीतारुणप्रभम् ।
उत्फुल्लहल्लकारक्तकमलैः पुण्डरीककैः ।। 4

नीलोत्पलैर्विलसितैः कुमुदालिविराजितैः ।
नाना पक्षिसमूहैश्च केकिकोकिलकूजितैः ।। 5

सरोभिः सागराकारैः पर्यन्तकदलीवृतैः ।
बिल्वोरुविपिनैश्चैव नक्षत्रालेढिशाखिभिः ।। 6

शिखण्डिनः कुण्डलिभिः सिह्मा मृगगणैः सह ।
व्याघ्रीस्तन्यं वनगवां वत्साः प्रीत्या पिबन्त्यपि ।। 7

नकुलाः सर्पमौलिस्था गरुडाः पन्नगैः सह ।
उलूका वायसैस्तत्र क्रीडन्ति च यथासुखम् ।। 8

तत्र देवं च ददृशुर्देवास्तत्र महेश्वरम् ।
नन्दिना वारिताश्चासन् गणैः शूलधरैःसुराः ।। 9

सत्पुण्डरीकधवलामलकोशकाश-
सङ्काशशारदसुनीरदपाण्डराभम् ।
विद्युत्पिशङ्गतटिनीजटकोटिभास्व-
च्छीतांशुशेखरमहो प्रणताः स्तुवन्ति ।। 10

**देवा ऊचुः -**

विद्युत्पुञ्जपिशङ्गचञ्चलजटाजूटस्फुरत्स्वर्धुनी-
खेलद्वालमरालविभ्रमकरश्रीचन्द्रलेखाङ्कितम् ।
अम्भोजासनमग्रनासनिहितप्रेक्षं महेशाभिधं
तेजः किञ्चन पूजितं सुरवरैर्निर्वातदीपप्रभम् ।। 11

भ्राजत्कोटीरशीर्षभ्रमदमरधुनी लोलकल्लोलखेल-
च्चन्द्रोद्वान्तामृतास्वादनमुदितहृदः पाहि भो नस्त्वजस्रम् ।।

कटकितचक्षुःश्रवसे
कलितावनतिः करीन्द्रचर्मवसे ।
मस्तकधृतचन्द्रमसे
कैलासक्षेत्रवासिने महसे ।। 13

भजन्तु कातिचिच्छ्रुतिं निगमशीर्षभीमाटवीं
चरन्तु कतिचित् परे परिचरन्तु कर्माटवीम् ।
वयं त्रिदशनिम्नगा तरुणचन्द्रलेखालस-
ज्जटामकुटमण्डितं प्रणतिभिः प्रमोदामहे ।। 14

मरुन्मौलिज्ज्योतिर्यममकुट नीराजितलस-
त्पादाम्भोजद्वन्द्वं रजतगिरिसौधे मणिमये ।
समासीनं कल्पद्रुमरुचिरमूले गिरिजया (?)
सहोपास्यं देवं भवजलधिसन्तारणपटुम् ।। 15

पुष्यप्रख्यातदिव्योत्सवभवपरमानन्दसम्पूर्णमूर्तिः
सर्वैर्देवैः समेतो दिवि भुवि मनुजैः श्रीमहादेवमूर्तिः ।
चित्रं सङ्गीयमानो मणिगणविलसद्धेमपुष्पे विमाने
भाति श्रीशैलकन्यातटभुवि सगुणः पातु नश्चन्द्रतूडः ।। 16

कान्तं दान्तं प्रशान्तं सकलदिविषदैस्तोषयन्तं ज्वलन्तं
कान्तं सन्तं महान्तं मुनिहृदि सततं संवसन्तं विभान्तम् ।
शान्ताहन्ता महान्तः श्रुतिशिरसि सदा स्वान्तसङ्क्रान्तचित्ता
ये ध्यायन्ति क्षणार्धं गिरिशमनुपमास्तेभ्य एवानतिर्नः ।। 17

*वेदान्तप्रतिपाद्यवस्तु विजयप्रौढात्मलाभ ....
परावारनिमग्नचित्तसनकप्रेष्ठाश्च योगीश्वराः ।
जानन्ति प्रभवं न यस्य निगमा वक्तुं न दक्षाश्चय-
च्छैवं तत्सवितुर्वरेण्यमतुलं ज्योतिः परं धीमहि ।। 18

धूतं यद्विभवेन खं सुमनसां बृन्दैर्यदाज्ञोह्यते
मालेवातुलशेवधिं श्रुतिशिरोभीमाटवीमध्यगम् ।
धन्या मूलिकयाधियान्ति सततं यन्मार्गयन्ते सदा
शैवं तत्सवितिर्वरेण्यमतुलं ज्योतिः परं धीमहि ।। 19

शुक्लं शुक्लसमस्त धर्मकरणं चित्रं यदीयेक्षणाद्
भेदध्यानकलां सहस्रशनिका नार्हन्ति अहो सर्वदा ।
ज्योतींषि प्रवराण्तीन्द्रियदशां यत्रोदयेयन्ति खे
शैवं तत्सवितिर्वरेण्यमतुलं ज्योतिः परं धीमहि ।।

---

* यथामातृकं लिख्यन्ते पद्यानि । विद्वद्भिः शोधनीयानि च ।

प्रमोदूतो लोकस्त्रिपुरहर शम्भो कथमहे
त्वदीयोऽहं दूतो वसति तदिशोहं यदि वदेः ।
भवेयुस्त्वद्दूता नहसितविधीन्द्राद्विपतका
अतस्त्रायस्वेमं नलिनरुगपाङ्गैककृपया ।। 21

प्रजोत्पत्तिं यस्य द्रुहिणसुरनाथप्रभृतयो
घनारब्धामीक्ष्य क्षुभितहृदया निर्जरगणाः ।
प्रसाद्य स्तोत्रैर्यत्सकल सुरसेनापतिमगुः
वरेण्यं तद्भर्गः सवितुरिति भीमैरनुपमम् ।। 22

सर्वैराङ्गिरसैरपि प्रविहितं कृत्यादिकं यत्स्मृति-
ध्वस्तं स्यात् प्रतिपाद्यवस्तु गिरिश सच्चित्सुखात्मा शिवः।
यस्यास्तां रविमण्डलान्तरगतां ज्योतिर्मयीं चिन्मयीं
गायत्रीं हृदि भावयाम सतं तत्वैकधीसिद्धये ।। 23

यस्य श्रीमुख सर्वदेववनिता नृत्यन्ति गायन्ति त-
द्भर्तारस्तु महाप्रदोषसमये मार्दङ्गिकाः केचन ।
प्रौढाः केचन वेणुतालकृतिनः प्रीतिं सुराः कुर्वते
शैवं तत्सवितुर्वरेण्यमतुलं ज्योतिः परं धीमहि । 24

योऽपाराद्भवसागरात्सकृदपि ध्यान स्वनामस्मृति-
प्रीतस्तारयति प्रभुः करुणया पर्णाशनानामपि
ध्यानाङ्गस्य तनुश्रुति प्रवचसा दूरीकृतात्मा परः
तं शम्भुं रविमण्डलान्तरगतं ज्योतिर्मयं धीमहि ।। 25

प्राप्तं नित्ययुवत्वमायुरमृतं देवैर्मृकण्डोः परं
पुत्रेणामिततेजसा धनदता सर्वातिशायिन्यहो ।

यक्षेशेन मदीयभक्तिफलदध्यानात्मविद्यर्षिभिः
तं शम्भुं रविमण्डलान्तरगतं ज्योतिर्मयं धीमहि ।। 26

धातुः सृष्टिपरम्पराचतुरता सर्वज्ञतेरेशता
प्रोक्तं व्याकरणं समस्तमुनिषु व्यातेषु विख्यापितम् ।
कृत्स्नं पाणिनिना पुरातिगहनं सद्भक्तितः सूत्रतः
तद्व्याख्यातमहीश्वरेण स परां वाचं प्रदिश्याच्छिवः।।27

वेदाशेषपुराणभारतचिरप्रख्यातसर्वामर-
ब्रह्मर्षित्रिदशर्षिसर्वमनुजप्रोद्गीयमानं सदा ।
यस्यान्वर्थमपीश्वरत्वमतुलं नित्यं विजेजीयते
शैवं तत्सवितुर्वरेण्यमतुलं ज्योतिः परं धीमहि ।। 28

प्राप्यन्ते बहुधान्यरत्नकनक स्त्रीरत्नसद्मोत्तम-
क्रीडाचामरशारदेन्दुरुचिरछत्रेभघोटादयः ।
वैरिञ्चंपदमैंदिरेशममरेशत्वं च यस्येज्यया
शैवं तत्सवितुर्वरेण्यमतुलं ज्योतिः परं धीमहि ।। 29

**सूत उवाच -**

शचीपतिरपांपतिः पितृपतिः स्वधायाः पति-
र्ननाम किलभारतीपतिरथाब्जसद्मापतिः ।
दिशां च पतिभिः सदा अनिलसोमसूर्योविभुं
अथोचुरधिरानताः पुरहरं पतीनांपतिम् ।। 30

**देवाः ऊचुः -**

सुरतातितरां सुदुःखिता
हर संहारय तारकोरुदुःखम् ।

कुरु पाणिग्रहणं च मङ्गलायाः
सुरसेनापतिकारणाय शम्भो ।। 31

सन्तारयाद्य सुतरां शिव तारकादि-
दुःखाम्बुधेस्त्वमसि देव सुकर्णधारः ।
सेनापतिर्भवतु नः सुकुमाररूपः
पर्जन्यघोरनिनदो वरतारजन्ये ।। 32

**स्कन्द उवाच -**

तदा स देवप्रवरोरुवाचं
श्रुत्वा मुदाह भगवान् सुरसत्तमांस्तान् ।
सेनापतिर्भवतु वः सुकुमाररूपः
शूरादितारकहरोऽस्तु मुदाद्य यामि ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
देवस्तवो नाम
पञ्चदशोऽध्यायः ।।



## ।। षोडशोऽध्यायः ।।

**स्कन्द उवाच -**

प्रीतश्च भगवान् शर्वः सुराणां संस्तवात्तदा ।
तपसा च महादेव्याः तदा स वृषभध्वजः ।। 1

हिताय च सुराणां च क्रीडार्थं भगवान् भवः ।
तदा हैमवतीं देवीं विवाहसुमना ह्यभूत् ।। 2

जगाम च विधिः पूर्वं मरीच्याद्यैर्महार्षिभिः ।
हिमाचलं महादेवीं फलपुष्पविभूषणैः ।। 3

विरजोऽम्बरसंयुक्तः नानावाद्यकतारकैः ।
नृत्यद्भिरप्सरस्सङ्घैः स्वयं तत्र प्रजापतिः ।। 4

समागतं च ब्रह्माणं श्रुत्वा नारदवाक्यतः ।
प्रत्युद्ययौ गिरिश्रेष्ठो गिरीशः सार्घ्यहस्तकः ।। 5

प्रणम्य पद्मजातं तं ऋषीन् सर्वान् गिरीश्वरः ।
उवाच विनयोदारं मेनया हिमभूधरः ।। 6

**हिमवानुवाच -**

धन्योऽस्मि गिरिवर्येषु श्रुत्वोवाच पितामहः ।

**ब्रह्मोवाच -**

गिरिश्रेष्ठो हि भगवान् दित्ससीशाय कन्यकाम् ।। 7

त्वत्तो धन्यतरः को वा तेन ते कुलमुन्नतम् ।
देवीं द्रष्टुमिहेच्छामि पूजयामि सुभूषणैः ।। 8

दर्शयाशु गिरिश्रेष्ठ मेनयाऽऽनीयतां शिवा ।
इत्थं स वेधसो वाक्यात् त्वरायुक्तोऽनयच्छिवाम् ।। 9

मेनया भूषणैर्युक्तां विरजाम्बरसंवृताम् ।
गन्धपुष्पैर्भूषितां तां तत्रानीता च संसदि ।। 10

अथ शैलसुता देवी शिबिकां समलङ्कृताम् ।
रत्नोपधानशय्याढ्यां मुक्तागुच्छान्वितां दधौ ।। 11

चामरे पार्श्वयोयोर्देव्या वीजयामासतुः शुभे ।
अप्सरोगणनृत्तैश्च भेरीमद्दलशङ्खजैः ।। 12

गन्धर्वगानैर्बन्दीनां जयशब्दैः सदो ययौ ।
सिन्दूरासक्तगण्डेन गणपेन पुरःसरम् ।। 13

गिरिमात्रशरीरेण समायाता तदाम्बिका ।
कोयमायाति गणपो गजाननवरावृतिः ।। 14

ब्रह्मादिविबुधैस्तत्र पश्यद्भिर्विस्मितं तदा ।
उत्थाय प्राणमद्ब्रह्मा मरीच्याद्यैर्महर्षिभिः ।। 15

स्वर्णपुष्पैर्विकीर्याम्बापादयोः स तदा विधिः ।
अवरुह्य महादेवी मेनया संस्थिता तदा ।। 16

रत्नसिह्मासने रम्ये मणिविद्रुमभूषिते ।
पुरः संस्थाप्य विघ्नेशं सर्वाभरणभूषितम् ।। 17

पश्यन्त्यप्सरसां नृत्तं वीजिता वरचामरैः ।
तदोत्थाय मुदा ब्रह्मा देव्याः पादाब्जयोर्युगम् ।। 18

प्रक्षाल्य पाणिना मूर्ध्नि तज्जलं स विधिर्दधे ।
गन्धपुष्पाणि वासांसि भूषणानि च भूतले ।। 19

फलजालं पुरो न्यस्य देवीं तां प्राणमद्विधिः ।
ब्रह्माणमाह सा देवी तदा वीक्ष्य गजाननम् ।। 20

मकुटाङ्गद केयूरभूषणैर्भूषितं पुरः ।

**श्री देव्युवाच -**

ब्रह्मान् महर्षिभिः पूज्यः सर्वैरेष गजाननः ।। 21

ममैव वरदानेन मत्पुत्रोऽयं मदंशजः ।
सर्वेषां विघ्ननाशाय विघ्नेशः पूज्यतामयम् ।। 22

तत्रैव देव्या वचसा स प्रणम्य गजाननम् ।
महर्षिभिः समभ्यर्च्य गन्धपुष्पाक्षतैः शुभैः ।। 23

फलैश्च भक्ष्यभोज्यैश्च वासोभिर्भूषणैर्वरैः ।
स्तुत्वा प्रणम्य विघ्नेशमेवमाह प्रजापतिः ।। 24

**ब्रह्मोवाच -**

देवीसुतं करधृताङ्कुशपाशदीप्तं
विघ्नाद्रिनाशकवरोदरनागबन्धम् ।
शुण्डाधृतोरुवरमोदकविघ्नसङ्घ-
सन्नोदकं प्रणमताद्य गणाधिनाथम् ।। 25

जगत्त्रयेऽपि सर्वत्र त्वं हि विश्वगणेश्वरः ।
सम्पूज्यः सर्वकार्येषु निर्विघ्नार्थं गजानन ।। 26

त्वामादौ सर्वकार्येषु पूजयन्तु सुरासुराः ।
अनभ्यर्चयतां विघ्नं भवत्येव पदे पदे ।। 27

इत्थं प्रसाद्य गणपं वारणास्यं प्रजापतिः ।
ततो हेमवतीं देवीं पूजयामास वै विधिः ।। 28

गन्धपुष्पैश्च वासोभिभूषणैर्भूष्य मेनया ।
गिरिराजं समैनाकं गिरिपत्नीं तदामुदा ।। 29

गन्धपुष्पैश्च ताम्बूलैस्तदाम्बां तुष्टुवे विधिः ।। 30

धृतापाये काये भिषगधिपजाये मम मुदे
महोत्साहे माये भवविपदुपाये गिरिसुते ।
जगद्रक्षादीक्षासकरुणकटाक्षा त्वमचिरात्
कदा साक्षाद्द्राक्षारसवदपरोक्षाय भवसि ।। 31

यशस्करमतस्करं स्वरुचिधिक्कृताहस्करं
सदिन्द्रमणिसुन्दरं रुचिरमन्दिरं मन्दिरम् ।
चिरन्तनपदं धनं जयवदिन्धनं बन्धनं
शिवस्य तदिदं धनं त्वदपरं धनं दन्धनम् ।। 32

इत्थं स्तुत्वा महादेवीं मुनिभिः संस्थितो विधिः ।
गिरिराट् गिरिभिः सार्धं गन्धपुष्पफलैर्विधिम् ।। 33

ताम्बूलैः पूजयामास तत्र ये सङ्गता मुदा ।
ब्रह्माणं प्राह विनयात् तत्रैवं गिरिराट् तदा ।। 34

गिरिभिर्मेनया चैव मैनाकेन विधिं तदा ।

हिमवानुवाच -

पराशक्तिरियं साक्षात्सञ्जाता कारणान्मम ॥ 35

अविनाभावरूपेयं शिवानन्या महेश्वरी ।
विचित्रशक्तिः सा देवी सर्वेषां जननी शिवा ॥ 36

त्वया नियुक्त एवात्र लोकपालनहेतवे ।
लोकधर्मं समाश्रित्य त्रिः सत्यं प्रवदाम्यहम् ॥ 37

ददामि शम्भवे देवीं मायामेतां च मायिने ।
गिरीणामानुमत्येन सुतपत्नीनयेन च ॥ 38

त्रिसत्यं मां महादेवः समायातु सुरैः सह ।
पावितुं मत्कुलं ब्रह्मन् श्वः प्रभाते महेश्वरः ॥ 39

स एव भगवीनीशो गणानामधिपः शिवः ।
सर्वत्मा सर्वगो देवः परमात्मा सनातनः ॥ 40

विश्वाधिको महादेवः गौर्याः पतिरुमापतिः ।
दत्वा गौरीं महेशाय कृतकृत्यो भवाम्यमहम् ॥ 41

मैनाकेन गिरिव्रातैर्मेनया कृतमङ्गला ।
प्रतीक्षेऽहं मुदा त्र्यक्षं गौतमेन सहादरात् ॥ 42

अस्मिन् पाणिग्रहे देव्या संविधत्स्व विधिं द्विजैः ।
मां प्रसादय देवेश निवृत्तो निवसाम्यहम् ॥ 43

गिरेविधिर्वचः श्रुत्वा प्रभाते कृतनैत्यकः ।
पूजितो गिरिराजेन तत्रोवास मुनीश्वरैः ।। 44

पुरोहितं गौतमं तमनुमान्य प्रजापतिः ।
चक्रे मुनीश्वरैः सार्धं गिरिणाचानुमोदितः ।। 45

वेदिकां समलङ्कृत्य रत्नसोपानमण्डिताम् ।
पुष्पमण्टपसंयुक्तां वितानाच्छादिताम्बराम् ।। 46

उत्फुल्लकमलोदारमालिकासमलङ्कृताम् ।
दिव्यमाणिक्यखचिततोरणेन च मण्डिताम् ।। 47

पुण्डरीकोत्पलभ्राजत्केतकावलिशोभिताम् ।
दिव्यसिह्मासनोपेतं स्वास्तृतां चित्रबर्हणैः ।। 48

धूपितां तगरामोदैर्दीपवृक्षैरलङ्कृताम् ।
शृङ्गारकुम्भकलशैः पल्लवोर्ध्वमुखैर्युताम् ।। 49

धूपपात्रैर्दीपपात्रैः पात्रैश्चकुशशोभितैः ।
पाद्यार्घ्याचमनैस्तत्र गन्धपुष्पसुगन्धिभिः ।। 50

पञ्चामृतैः पञ्चपात्रैर्मधुपर्कविराजितैः ।
हेमरूप्यसमुद्भूतै रत्नपात्रैस्तथाविधैः ।। 51

फलपात्रैः पूर्णपात्रैरक्षतैः पुष्पपात्रकैः ।
दिव्यचन्दपात्रैश्च पात्रैस्ताम्बूलपूरितैः ।। 52

लाजाश्च यवगोधूमाः प्रणीता प्रोक्षणी तथा ।
प्राज्याज्यपात्रैर्विपुलैरिध्मबर्हियुतैस्तथा ।। 53

नीराजनाक्षतापात्रैर्नारिकेलाम्रपात्रकैः ।
रम्भाफलैश्च तक्कोलकर्पूरागरुचन्दनैः ।। 54

गणाधिपं च तत्रस्थं चकार परमासने ।
तं भूषणैर्भासुरं ब्रह्मा गन्धपुष्पविराजितम् ।। 55

सेवितं प्रमथैस्तत्र चलच्चामरवीजनैः ।
सप्तार्चिषं प्रतिष्ठाप्य स्वधास्वाहाविराजितम् ।। 56

भूषितं भूषणैरग्निं प्रदक्षिणशिखं स्थितम् ।
मुनिभिर्वालखिल्यैश्च वैखानसकुलैस्तदा ।। 57

वसिष्ठो गौतमो गार्ग्यो धौम्यो दक्षस्तथाङ्गिराः ।
भृगुश्च काश्यपश्चैव पुलसत्यः पुलहोऽत्रिकः ।। 58

विश्वामित्रो भरद्वाजोऽगस्त्यो बभ्रुस्तथैव च ।
शान्तिं प्रतिसरं तत्र कारयामास वै विधिः ।। 59

तान् प्रतोष्यान्नपानाद्यैर्गोहिरण्याम्बरादिभिः ।
सम्पूज्य गणराजं च स्वस्ति वाच्य द्विजैः सह ।। 60

आकाङ्क्षन् त्र्यक्षपादाब्जं वीक्षितुं भगवानजः ।
नारदं प्रेषयामास शिवागमनकारणात् ।। 61

स सम्भ्रमेण महता गिरिभिर्मुनिभिर्विधिः ।। 62

कमलालिरिव प्रतीक्ष्य मित्रं
विधिरास्ते द्विजपुङ्गवैर्महेशम् ।
गिरिभिः सुरसत्तमैस्तदानीं
परिबद्धाञ्जलिरीशपादसक्तः ।। 63

।। इति श्रीशिवरहस्ये द्वादशाम्शो
विधिसंविधानं नाम
षोडशोऽध्यायः ।।



## ।। सप्तदशोऽध्यायः ।।

**स्कन्द उवाच -**

नारदो देवदेवेशं प्रणम्य प्रार्थयत्तदा ।
बिल्वादिभिर्देवगणैर्नन्दिभृङ्गीश्वरादिभिः ।। 1

समावृत्य स्थितं तत्र मन्दरे चारुकन्दरे ।

**नारद उवाच -**

तवाज्ञया विधिः पूर्वं सङ्गतो गिरिशेन हि ।। 2

सम्भृत्य सर्वसम्भारं मुनीन्द्रैस्त्वां प्रतीक्षते ।
गिरीशोऽपि समैनाको मेनया द्वारि तिष्ठति ।। 3

अनुग्राह्योऽयमधुना मुहूर्तस्त्वरते प्रभो ।
तन्नारदवचः श्रुत्वा उत्थाय तपसः शिवः ।। 4

यथेष्टमिति लोकेशः प्राह देवो महेश्वरः ।

**शिव उवाच -**

नन्दिन् मद्गणपा यत्र समायान्तु मदन्तिकम् ।। 5

विष्णो सन्नह्यतां सेना सुराणामस्त्रशोभिता ।
नन्दी विष्णुः प्रणम्येशं शक्रमाज्ञापयंस्तदा ।। 6

**हरिरुवाच -**

सन्नह्यतां महासेना सुराणां सुपताकिनी ।
मा विलम्बो भवत्वत्र निर्गच्छति महेश्वरः ।। 7

गिरीन्द्रनिलयं देव्याः कर्तुं पाणिग्रहं विभुः ।
देवपत्न्यश्च याः सर्वा मातरो भूषणान्विताः ।। 8

मण्डयित्वा स्वकाङ्गानि वासोभूषणगन्धकैः ।
पुष्पैर्दिव्याङ्गरागैश्च नीराजनकराःस्त्रियः ।। 9

समागच्छन्तु देवेश-पाणिग्रहणमङ्गले ।
इन्द्रोऽप्याज्ञापयामास आनेतुं मातलिं प्रति ।। 10

स मातलिस्त्वरायुक्तो देवसेनां समानयत् ।
शक्रस्य गणपा ये च वज्रोद्यतकराः शुभाः ।। 11

मकुटोज्ज्वलमस्तास्ते युवानो मृष्टकुण्डलाः ।
रक्तचन्दनलिप्ताङ्गा वाद्यकास्तत्र चागताः ।। 12

पताकावैजयन्तीभिः पटहानकनिःस्वनैः ।
तथा यमगणास्तत्र कृष्णाङ्गा विकृतायुधाः ।। 13

करालदंष्ट्रोरुशिखा मुसलायुधपाणयः ।
समागता यमेनैव पाशदण्डायुधेन च ।। 14

वारुणा गणपास्तत्र हरिता बाहुशालिना ।
पाशखड्गकराः सर्वे नियुतं वरुणेन हि ।। 15

यक्षाधिपेन साहिता यक्षाः शिक्षाविशारदाः ।
प्रयुतं खड्गखेटाधैः समायाता मदोद्धताः ।। 16

वायुना वायुगणपास्तोमरासक्तपाणयः ।
समायाता(?)युतं तत्र गन्धस्रग्वरभूषिताः ।। 18

निर्ऋतेर्गणपा येऽत्र प्रासासिवरपाणयः ।
देवेन तेनचायाता अयुतं भूषणान्विताः ।। 19

ईशानो गणपैस्तत्र समायाताः सहस्रशः ।
निषङ्गिभिः कवचिभिर्हेतितोमरपाणिभिः ।। 20

इषुमद्भिश्चापधृग्भिर्दिविभूम्यन्तरिक्षगैः ।
अथायाश्च मरुतः सहस्राण्यत्र षोडश ।। 21

वसवो बलिनस्तत्र त्रिंशत्साहस्रमूर्जिताः ।
द्वादशादित्यकास्तत्र सहस्रेण पृथक् पृथक् ।। 22

सुधन्वानसहस्रेण धनुर्बाणकरा गताः ।
अश्विनौ द्विसहस्रेण बलेन शरपाणिना ।। 23

नागाः किम्पुरुषाः सिद्धा गन्धर्वा वाद्यवादकाः ।
पिशाचा गरुडा यक्षा राक्षसा दैत्यनायकाः ।। 24

नागाश्चाप्सरसो रूपलावण्या गीतपेशलाः ।
पितरो यातुधानाश्च डाकिन्यो योगिनीगणाः ।। 25
(धृतनानाविधास्त्राश्च)

किन्नरा भैरवास्तत्र चामुण्डा शाकिनीगणाः ।
गावोऽथ मातरस्तत्र समायाताः सुपेशलाः ।। 26

सर्वाभरणभूषाढ्या स्रग्गन्धाश्च सुवाससः ।
धृतनानाविधास्त्राश्च नानावाद्यकृतादराः ।। 27

अथादितिर्दितिर्लक्ष्मीर्धेनुर्वाणी च कालिका ।
पुलोमा विपुला चैव सिंहिका सुरसा तथा ।। 28

सिद्धिर्ऋद्धिः क्रिया दुर्गा स्वधास्वाहा दनुः कुहूः ।
राका स्पृहा सिनीवाली स्वरा बुद्धिर्मतिः शची ।। 29

अरुन्धती च सावित्रीगायत्रीरोहिणीमुखाः ।
गार्गी मैत्रायणी चैव अनसूया पतिव्रता ।। 30

लोपामुद्रा तथा गार्गी सन्नतिः सुनतिः क्रुधा ।
रम्भा मृणालिका चैव मेनका सहजन्यका ।। 31

विप्रचित्तिर्मिश्रकेशी ऊर्वशी चारुहासिनी ।
विश्वाची च घृताची च मित्रविन्दा अलम्बुसा ।। 32

एताश्चाप्सरसां श्रेष्ठाः अप्सरःकोटयो नव ।
हावभावमनोज्ञेन तौर्यत्रिकयुता ययुः ।। 33

सागरा गिरयो मेध्या नद्यः संवत्सरा ग्रहाः ।
सोमेन सहिताः सर्वे सामायातास्त्रिकोटिकम् ।। 34

मनोहरेण वेषेण ऋक्षाणि ऋषयो मनुः ।
वेदा मन्त्रास्तथा यज्ञाश्छन्दांसि प्रणवस्तथा ।। 35

मन्त्रग्रामं तथा सर्वंपुराणानि च शास्त्रकम् ।
स्वरूपवेषाभरणास्तत्र जग्मुश्च सङ्घशः ।। 36

उद्वाहः शङ्करस्येति देवदेवाज्ञया तदा ।
भासयन्तो भूषणैश्च शास्त्राणां वादघोषणैः ।। 37

त्रिषष्टिकोटितुरगाः रुक्मभाण्डपरिच्छदाः ।
जविनो बलसम्पन्नाः संस्थिताः सुरसादिनः ।। 38

सुरघृष्टां महीं चक्रुर्हेषाभूषैकसन्मुखाः ।
तोमराङ्कुशबाणाग्रपताकावलिभूषिताः ।। 39

गजा महामात्रयुता दन्तवेष्टशराग्रकाः ।
उद्यत्कुम्भाः कर्णतालैर्लम्बितालोलचामराः ।। 40

त्रिंशत्कोटिर्ययुस्तत्र मेघा इव भुवं गताः ।
रथाः पञ्चशतं कोट्यः सुतरङ्गाः सुचक्रकाः ।। 41

सुपताकाः सावरोधा सदश्वाः सम्प्रचोदिताः ।
रथनेमिस्वनैस्तत्र गजाश्ववृकबृंहितैः ।। 42

धूयमानपताकाग्रैः शङ्खदुन्दुभिनिःस्वनैः ।
बधिरीकृतदिक्चक्रं पङ्क्तिशः संस्थिताः सुराः ।। 43

प्रणन्तुं श्रीमहेशानं तत्र तत्र स्वकाः स्वकाः ।
गणेन्द्रा वारणेन्द्राभा नन्दिकेशज्ञया गताः ।। 44

उद्वाहः शङ्करस्येति तत्राजग्मुः पृथक् पृथक् ।
सूर्याभाः शङ्खवर्णाश्च रक्तनीलारुणप्रभाः ।। 45

सुपीता हरितास्तत्र युवानो बलशालिनः ।
कोट्योऽथ संख्या तेषां तु तत्र नामानि वै शृणु ।। 46

नन्दिकेशोऽथ दशभिर्भैरवोऽष्टाभिरेव च ।
भृङ्गी कोटिद्वयेनाथ रिटिः कोट्या समाययौ ।। 47

नवकोट्या वीरभद्रः कालाग्निर्दशकोटिभिः ।
बाणत्रयेण वृषभश्चण्डीशः पञ्चभिर्वृतः ।। 48

नियुतं च महानन्दी सोमनन्दी तथाऽयुतम् ।
दशभिः केसराक्षश्च विद्युतोऽष्टभिरेव च ।। 49

पञ्चभिस्तु कपालीशः पङ्क्तिभिस्च पिचण्डिलः ।
कुम्भकश्च कुहुण्डश्च द्विकोटिभ्यां समीयतुः ।। 50

विष्टम्भः कोटिगणपैर्भेरुण्डश्चात्र कोटितः ।
पिप्पलः सद्रथश्चैव प्रयुतं नियुतं तथा ।। 51

आययौ च सहस्राणां नवत्या धुन्धुलीगणः ।
सप्ताशीतिसहस्रेण महाकालस्तु कोटितः ।। 52

अभीतो दशसाहस्रैः सुमुखः पञ्चभिस्तथा ।
पिङ्गलश्च त्रिसाहस्रैः कुमुदोऽष्टसहस्रकैः ।। 53

पूर्णभद्रोऽयुतेनागात् सुभद्रः सप्तभिर्ययौ ।
विलोमा दशसाहस्रैः पिङ्गलोऽथाष्टभिर्ययौ ।। 54

कुम्भाण्डः षट्सहस्रेण रणभद्रोऽथ विंशतिः ।
प्रयुधानो निधानश्च अष्टाशीतिसहस्रकैः ।। 55

एते गणेश्वरास्तत्र समायाताः पृथक् पृथक् ।
एते चान्येऽप्यसङ्ख्यातास्तत्राजग्मुर्धृतायुधाः ।। 56

सर्वे भस्मावदाताश्च जटामकुटधारिणः ।
नीलकण्ठास्त्रिणेत्राश्च हारकेयूरपन्नगाः ।। 57

निषङ्गिणश्च सर्वेऽपि शरकार्मुकपाणयः ।
समागतांस्तान् गणपान्निवेद्य सुरसत्तमान् ।। 58

नन्दिकेशः पुरस्तस्थौ हरिणाजिष्णुना तथा ।
तानागतानथ ज्ञात्वा महादेवो वृषं तदा ।। 59

चक्रे तुरङ्गमाकारं श्वेताभ्रशिखरोपमम् ।
रत्नपल्याणसंयुक्तं सुखलीनास्यकं तथा ।। 60

स्वयं च मुकुटोद्दामशोभी चन्द्रार्कभासुरः ।
रत्नमुक्तालसद्धारो रत्नग्रैवेयकाङ्गदः ।। 61

त्रिलोचनोऽरविन्दाक्षो लसद्दिव्याम्बरो बभौ ।
सुमनोवर्षनिकरैरभिवृष्टो महेश्वरः ।। 62

दुन्दुभीनां निनादैश्च वेदबन्दिकृतस्तवैः ।
जपतां गणदेवानां स्तवैर्नीराजनैः स्त्रियाम्(?) ।। 63

नन्दिनो हस्तमालम्ब्य तण्डुसन्धृतछत्रकः ।
रत्नपादुकपादाब्जो निर्ययौ स गणैः सुरैः ।। 64

हरिणा चाथ शक्रेण प्रोत्सारितसुरासुरः ।
आलोकनेन सर्वेषां प्रणामालिं प्रगृह्य च ।। 65

नदत्सु गजभेरीषु(?)शङ्खध्मातासु दिक्ष्वपि ।
वर्षत्सु अभ्रेषु कुसुमं नृत्यन्तीष्वप्सरस्सु च ।। 66

नारदस्तुम्बुरुश्चापि वीणयाऽगायतां तदा ।। 67

तुङ्गं तुरङ्गमधिरुह्यपिनाकपाणि-
रश्वाधिपः सुरवरैर्गणमुख्यसङ्घैः ।
पादातिभिर्हरिमहेन्द्रमुखैश्च सिद्धैः
सम्पूजितो गिरिवरस्य गृहं जगाम ।। 68

त्वङ्गत्तुरङ्गसुखलीनविचालनेन
हृष्यत्पदातिगणसन्धृतपादपद्मः ।
मायूरवीजनसुवीजितचामरौघैः
छत्रावृतास्यकमलो गिरिशः प्रतस्थे ।। 69

हिमाचलगृहं ययौ सुरवरैर्गणेन्द्रैर्हरो
नदत्सुगजपृष्ठगैर्विजितकाब्धिभेरीरवैः ।
सुवर्षितसुराङ्गनाकुसुमलाजकार्द्राक्षतैः
सुरोरुसुपताकिनीचलदपारवेत्राग्रके ।। 70

नदत्सुगणबृंहितैर्हयवरोरुहेषारवै
रथाङ्गपरिवर्तनैः श्रुतिशिरोगतैश्चस्तवैः ।। 71

द्योतन्ति तत्र गणपाः किल कामरूपाः
शूलासिबाणवरहस्तधृतोर्ध्वचापाः ।
देहप्रभाविजित तप्तसुजातरूपा
यूपा इवाग्रनिकरा अपि भूपरूपाः ।। 72

ईशानपूजननिरस्तसमस्तपापाः ।। 73

धृतबाणगणा गजेश्वरास्ते
भगणेशानविलासिसत्कपर्दाः ।
फणिभस्मविभूषणा ययुर्वै
हर ते शरणं हृदा सदा प्रपन्नाः ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे शिवोद्वाहगमनं नाम
सप्तदशोऽध्यायः ।।



## ।। अष्टादशोऽध्यायः ।।

**स्कन्द उवाच -**

वृषाश्वादवरुह्याथ नन्दिना दत्तसत्करः ।
रत्नविभ्राजिपादाब्जयुगलालम्बिपादुकः ।। 1

गिरिराजसुविस्तीर्णद्वाररोधिसुरासुरः ।
हरिशक्रकरस्फूर्जद्वेत्रप्रोत्सारितामरः ।। 2

रत्नपात्रकरद्योतिनीराज्यार्तिसुमौक्तिकः ।
अक्षतोत्कीर्णमकुटस्तारा इव नभश्चयुताः ।। 3

नगाङ्गनागणोत्कीर्णसुमलाजहिरण्यजैः ।
विकिरन्त्येव गिरयः प्रणाममुखराः शिवाः ।। 4

तदा विवेश भगवान् गिरिराजगृहं महत् ।
विवाहमण्टपं चित्रं ब्रह्मणा मुनिभिर्युतम् ।। 5

सब्रह्माद्याश्च मुनयः प्रणेमुर्भक्तिनिर्भराः ।
पुरः स्थितं गणेशानं प्राणमत्पादयोः शिवः ।। 6

उत्थाप्यालिङ्ग्य चाजिघ्रत्कुम्भ्यास्यः प्रणतं शिवम् ।
ब्रह्मणा ज्ञापितो देवो गौरीपुत्रप्रपूजने ।। 7

गणाधीशं महादेवः सुरैर्द्विजगणैर्गणैः ।
संपूज्य पुष्पगन्धैश्च फलैर्वासोविभूषणैः ।। 8

उवाच वरदो देवो महादेवस्तदा मुदा ।

**ईश्वर उवाच -**

मां वा नारायणं वापि ब्रह्माणं वापि पुत्रक ।। 9

त्वामनभ्यर्च्य कार्येषु विघ्नस्तेषां भविष्यति ।
त्वां गन्धपुष्पधूपाद्यैः परिपूज्यादिमं सुराः ।। 10

लभन्तां वाञ्छितान् कामान् त्रिसत्यं प्रवदाम्यहम् ।
ब्रह्मविष्ण्वादयो देवा गणैर्द्विजवरैः सह ।। 11

गौर्याः पुत्रश्च मत्प्रीत्यै गणपः पूज्यतां स्तवैः ।
शिवाज्ञां शिरसा गृह्य ब्रह्मविष्ण्वादयो गणाः ।। 12

सम्पूज्य फलपुष्पाद्यैर्भक्ष्यभोज्यैस्तथास्तुवन् ।

**देवा ऊचुः -**

पाशाङ्कुशकरासक्तमोदकं विघ्ननोदकम् ।। 13

बोधकं सर्वशास्त्राणां भजामो विघ्ननाशकम् ।। 14

वेतण्डगण्डं शशिखण्डसूनुं
दानोदगण्डं नतदेवषण्डम् ।
स्वभक्तविघ्नार्तिहरप्रचण्डं
नमाम्यखण्डं सुरहस्तिचण्डम् ।। 15

नाकिनायकनताब्जपादुकं
विघ्ननाशविनायकं भजे ।
विष्णुसायकसुभक्तिदायकं
प्रणमताद्य सुरा गणनायकम् ।। 16

हृदन्तर्विभान्तं धियं चोदयन्तं
उमाकान्तमोदप्रदं सत्सुदन्तम् ।
प्रशान्तं सुदान्तं हसन्तं नदन्तं
*वसन्तं मुदा तं भजाम्येकदन्तम् ।। 17

सुरावनं सुपावनं नमज्जनार्तिनाशनं
सतां हृदेकवासिनं भजे मतङ्गजाननम् ।
सनातनं निरञ्जनं फलादिसारभोजनं
स्वभक्तविघ्ननाशनं भजे मतङ्गजाननम् ।। 18

चरातरादिकारणं स्वभक्तपापहारिणं
भवाम्बुधेः सुतारणं प्रशान्तकामपूरणम् ।
गजाननप्रसादनं पठन्ति ये मनीषिणः
न ते भवन्ति दुःखिताननना गणेशशासनात् ।। 19

इत्थं संस्तुत्य सम्पूज्य गणेशं सुरसत्तमाः ।
अत्रान्तरे समायातो गिरिराण्मेनया सह ।। 20

वेदिं प्रवेशयामास महादेवं सुरैः सह ।
रत्नसिंह्मासने दिव्ये संस्थाप्य परमेश्वरम् ।। 21

पादौ प्रक्षाल्य देवस्य रत्नभृङ्गारजैर्जलैः ।
मेनाकरान्तनिर्यातैः सम्प्रोक्ष्याथ स्वामौलिषु ।। 22

ब्रह्मविष्ण्वादिविबुधाः कृतार्था गिरिणा सह ।
तत्राह विष्णुर्देवेशो ब्रह्माणं तं विलोकयन् ।। 23

---

* प्रशान्तं सुदान्तं नदन्तं हृदन्त-
र्वसन्तं सतां तं भजाम्येकदन्तम् । इत्यपि पाठः सङ्गतः भाति ।

भवानहं समुत्पन्नौ देवस्य भुजयोः पुरा ।
ललाटतटतो रुद्रः सुरा मुनिगणैः सह ।। 24

एषा हैमवती गौरी माया सा परमेष्ठिनः ।
सञ्जानन् लोकसिध्यर्थमुद्वाहार्थमिहागतः ।। 25

भवोऽसौ जगतां धाता पिता तव ममापि च ।
माता देवी सदाऽस्माकं ययोरुद्वाहमङ्गलम् ।। 26

पश्यामो धन्यनेत्राभ्यां विमुक्तभवबन्धनाः ।
अस्यैव मूर्तिभिर्व्याप्तं जगत्सर्वं चराचरम् ।। 27

क्षित्यम्ब्वग्न्यनिलाकाशसूर्येन्द्वात्मा च दीक्षितः ।
महादेवो महानात्मा स्वतन्त्रः सर्वहृद्गतः ।। 28

तदा स गिरिराट् तत्र मेनयाऽपूजयद्वरम् ।
मधुपर्केण विधिना पुष्पैर्गन्धैर्मनोरमैः ।। 29

धूपैर्दीपैश्च नैवेद्यैर्वासोऽलङ्कारभूषणैः ।
गामर्घ्यं शम्भवे दत्वा तामनुज्ञाप्य शङ्करः ।। 30

संस्थितः सुरसङ्घैश्च गणैर्वीजितचामरः ।
नदत्सु देवतूर्येषु गायत्सु सुमनोहरम् ।। 31

कीर्यमाणेषु पुष्पेषु साक्षतेषु सभाङ्गणे ।
सदस्येषु सुरेन्द्रेषु गणेषु च महत्सु च ।। 32

गर्गोदिते शुभे लग्ने गिरिराट् मेनया तदा ।
गिरिजां समलङ्कृत्य विमलां वरभूषणैः ।। 33

समानीय महादेवीं तदा प्रत्यङ्मुखस्थिताम् ।
वीजितां चामरैस्तत्र सखीभिः संवृतां शिवाम् ।। 34

मध्येपटधरावास्तां तदा शक्रहरी मुदा ।
सुराः साद्राक्षताहस्तास्तस्थुः प्राञ्जलयो गणाः ।। 35

स्तिमिते वाद्यघोषे च जेपुस्तत्र महर्षयः ।
वसिष्ठो वामदेवश्च गौतमोऽत्रिर्भृगुस्तथा ।। 36

जमदग्निः काश्यपश्च भरद्वाजो महर्षयः ।
प्रत्येकं मङ्गलं पद्यं पठन्ति स्म शिवोत्सवे ।। 37

**वसिष्ठ उवाच -**

मौर्वीमूर्ध्निरथः शरासनशिरःसञ्चारिचक्रद्वयं
चक्रान्तर्निहितः शरस्तदुदरे सूतस्तदास्ये हयाः ।
तेषामेव शिरःसु देववसतिर्यस्येति यस्यश्रुतं
देवाश्चित्रपरिच्छदः स भगवान् कुर्यात्सदा मङ्गलम् ।।38

**वामदेव उवाच -**

यो देवः श्रुतिशेखरेषु विदितो यं भासकं जानते
येन भ्राम्यति लोकजालमखिलं यस्मै नमस्कुर्वते ।
यस्मान्नापरमस्ति किञ्चिदपि वै यस्याङ्गमेतज्जगत्
यस्मिंस्तिष्ठति सर्वमेव भुवनं कुर्यात्सदा(स मे)मङ्गलम् ।।

**गौतम उवाच -**

विश्वात्मा भगवान् चराचरतनुर्विश्वात्मकोऽयं शिवो
वेदान्तप्रथिरुवैभवपदो निःश्वासवेदो हरः ।

यो गौरीरमणोऽत्र निर्जरवरो विश्वप्रकाशात्मको
विध्वस्ताखिलभक्तपातककुलः कुर्यात्स मे मङ्गलम् ।। 40

**अत्रिरुवाच -**

यं देवा न हि जानते पुरहरं शम्भुं भवानीपतिं
विश्वात्मानमनन्तविष्णुविधिभिः संसेव्यपादाम्बुजम् ।
तं सर्वादिगुरुं मनोजवपुषं गौरीविवाहोत्सुकं
वन्दे तच्चरणाम्बुजन्मयुगलं कुर्यात्सदामङ्गलम् ।।

**भृगुरुवाच -**

यद्भीत्या पवतेऽनिलोऽपि सहसा विश्वोदयस्थो रविः
अग्निश्चोर्ध्वशिखो भवत्यनुदिनं शक्रः सुरान् पाति वै ।
मृत्युर्धावति यद्भयेन सुतरां मृत्युञ्जयस्याज्ञया
यं साम्बं हृदये भजन्ति मुनयः सोऽयं शिवायास्तु नः ।।

**जमदग्निरुवाच -**

यो विष्णोर्जनिता सुरासुरगुरुर्वेदान्तवेद्यो हरो
यत्पादाम्बुजपूजनेन जगती धन्या कृतार्थाऽभवत् ।
धन्योऽयं गिरिराजराजतिलकः सत्पात्रकन्यार्पणात्
नान्यं जानथ शङ्करात् सुरवराः कुर्यात्स वो मङ्गलम् ।।

**काश्यप उवाच -**

सेवार्थागतविघ्नराट्गुहलसद्वाहेक्षणाभ्युत्थ त-
त्प्रत्यायात भुजङ्गफूत्कृतिकनत्फालाग्निकीलोत्करैः ।
इन्दुस्यन्दिसुधोपजीवितकरिव्याघ्रादिनादार्भटी-
भीताक्षावनतत्परागिरिसुताकान्तेक्षणान्मङ्गलम् ।। 44

**भरद्वाज उवाच -**

कारुण्यामृतसारपूरितलसन्नेत्रान्तसंवीक्षण-
त्रैलोक्यावनदीक्षितं जपवटीराजत्कराम्भोरुहम् ।
साम्बं निर्जरदीर्धिकाप्रविलसत्संफुल्लपद्मावली-
धूलीधूसरकर्बुरोज्ज्वलजटारेखं भजे श्रेयसे ।। 45

इत्थं मङ्गलवाक्यानि प्रयुञ्जाना महर्षयः ।
अक्षतान् व्यकिरन् गौरीशङ्करोपरि सादरम् ।। 46

तत्राभिवीक्ष्य रतिमेव सुदुःखितां ता-
मम्बामुदैक्षत शिवः स्मरसम्प्रदाने ।
सा शर्ववक्त्रमभिवीक्ष्य दयान्तरङ्गा
चक्रेऽङ्गसङ्गिनमनङ्गं मपाङ्गपातैः ।। 47

अजोऽपि लाजैर्वरवह्निमौलौ
जुहाव मन्त्रैर्मुनिवर्यजुष्टः ।
स्वचारुवक्त्रैः शशिखण्डभूषणं
विलोक्य नैत्रैर्मुदमाप विस्मितः ।। 48

ददौ स भृङ्गारिकधारया समं
स मेनया भूधरनायकः करे ।
हरस्य हस्ताब्जतले भवान्याः
पाणिं ददत्पात्रमहो बभूव ।। 49

सुरास्तदोचुर्मुनयो गिरीश्वरं
धन्यो हि मान्यो हरपात्रदाता ।

प्रतिग्रहीतापि महेश्वरः स्वयं
धन्या किलैषा जगतां जनित्री ।। 50

पाणिग्रहे पर्वतराजपुत्र्याः
पादाम्बुजं पाणिसरोरुहाभ्याम् ।
अश्मानमारोपयतः स्मरारे-
र्मन्दस्मितं मङ्गलमातनोतु ।। 51

प्रदक्षिणावर्तशिखं हि वह्निं
बिभ्यन्तं(?) एनं क्रमणेन तौ शिवौ ।
परीत्य शेषं विधिना समाप्य
मुदा तदा तस्थतुरेव हर्षितौ ।। 52

नीराज्य गौरीसहितं महेस्वरं
मेना तदा सा प्रणनाम हृष्टा ।
गिरीश्वरश्चापि तदादिदम्पती
ननाम हृष्टो गिरिवर्यजुष्टः ।। 53

ताम्बूलविश्राणनगन्धपुष्पैः
सुरासुरान् भूधरनायकांश्च ।
चकार पूजाभिरतीव हृष्टान्
तुष्टान्तरङ्गोऽथ शिवाज्ञया हरिः ।। 54

गोभूहिरण्यं कनकाम्बरं वसु
द्विजेषु सर्वर्षिषु शङ्कराज्ञया ।
विश्राणको वैश्रवणो मुदाऽभूत्
तदा शिवायाः सुविवाहमङ्गले ।। 55

रुद्रं हरिद्राङ्गमुमा चकार
सा न्यस्ततन्द्रापि सुचन्द्रशेखरम् ।
तदाद्रिपत्नी गणगीतमन्द्रैः
सुचन्दनार्द्रं पटवासभूषितम् ।। 56

हरोऽपि देव्या विजहार हर्षित-
श्चकार पुष्पैः सहकारपूजाम् ।। 57

।। इति श्रीशिवरहस्ये द्वादशाम्शे
गौराशङ्करविवाहो नाम
अष्टादशोऽध्यायः ।।



## ।। एकोनविंशोऽध्यायः ।।

**स्कन्द उवाच -**

तं शङ्करं प्रणम्यैव गौरीं च सुरसत्तमाः ।
विष्णुब्रह्मादयो देवा गणेशमुनिसत्तमाः ।। 1

ययुः स्वावसथं तत्र हिमशैले मनोरमे ।
गिरिराजाभ्यनुज्ञाता आद्वारं सुरसत्तमाः ।। 2

देवभोग्यानावसथान् निर्मितान् विश्वकर्मणा ।
भक्ष्य भोज्यान्नबहुलान् वटवाटी विराजितान् ।। 3

भूषणैश्चैव वासोभिर्गन्धपुष्पैर्विराजितान् ।
शय्यासनविहारैश्च सरोवरकुलैस्तथा ।। 4

नन्दिकेशादिगणपा ऊचुस्तत्र शिवाज्ञया ।
मुनयोऽप्याश्रमेष्वेव नियतेष्वावसन् द्विजाः ।। 5

कृतनित्यक्रियास्तत्र शिवलिङ्गसमर्चकाः ।
गणाः सुरगणास्तत्र वसन्ति त्रिदिवाधिके ।। 6

विष्टपारक्षणे कष्टं अष्टमूर्तिकृपावशात् ।
नस्मरन्तो वसन्त्यत्र शिपिविष्टपदार्चकाः ।। 7

नृत्तैगेयैर्भक्ष्यभोज्यैः सदाराः सुखिनोऽवसन् ।
गिरीन्द्रो गिरिभिः सार्धं मैनाकेन च मेनया ।। 8

नदत्सु देवतूर्येषु नृत्यन्तीष्वप्सरस्सु च ।
गौतमेनाभ्यगात्सर्वान् विमानेनार्करोचिषा ।। 9

नन्दिकेशादिगणपान् विष्णुब्रह्मादिकान् सुरान् ।
मुनीन् सशिष्यांस्तत्रैव उद्वाहार्थं समागतान् ।। 10

गन्धर्वसिद्धसाध्यांश्च नागान् किम्पुरुषांस्तथा ।
विद्याधरान् सागरांश्च नद्यृक्षाणि ग्रहांस्तथा ।। 11

न्यमन्त्रयत सर्वास्तान् साक्षतं गिरिसत्तमः ।
तत्पत्नीश्च निमन्त्र्याथ मेना सा हृष्टमानसा ।। 12

पूजितो गन्धपुष्पाद्यैर्गौतमेन गिरीश्वरः ।
ताम्बूलदानैर्गिरिभिर्वस्त्रालङ्कारभूषणैः ।। 13

देवपत्नीभिरपि सा मेना गिर्यङ्गनागणैः ।
गन्धपुष्पैश्च वासोभिः पूजिता निर्ययौ तदा ।। 14

गिरीणां च विमानेन पूजाभिस्तत्रतत्र हि ।
एवं प्रतिसुरं तत्र निमन्त्र्य गणपान् मुनीन् ।। 15

शिवाज्ञया मुनि(गिरि)वरः गृहे भोजयितुं सुरान् ।
तत्रास्तगत आदित्ये लक्षस्तम्भोरुमण्टपे ।। 16

चित्रिते गन्धपुष्पाद्यैर्धूपिते सितभूतले ।
कदलीदलविस्तीर्णपात्रे चापि सुरौक्मके ।। 17

रङ्गवल्लीविरचितैः प्रत्यन्तैः प्रोक्षितैस्तदा ।
सुतप्तशातकुम्भोरुदीपस्तम्भैरलङ्कृतैः ।। 18

भक्ष्यैर्यवजगोधूमपायसापूपमण्डकैः ।
फैणिकावटकैश्चैव पर्पटैर्धृतपाचितैः ।। 19

शोकहारिमहाशाकैः सोपदंशविराजितैः ।
लड्डुकैर्मोदकैश्चैव दधिक्षीरादिभिस्तथा ।। 20

मांसमुच्चावचं तत्र मात्स्यमैणेयमाजकम् ।
निष्टप्तघृतसन्तप्तं लवङ्गैलासुपाचितम् ।। 21

प्राज्याज्यगन्धसुभगं वरपात्रेष्वलङ्कृतम् ।
वसन्तमल्लीकलिकासमान्नं गन्धभासुरम् ।। 22

स गिरिर्गिरिपत्नीभिः पर्यवेषयदञ्जसा ।
मांसौदनैस्तथा चित्रैर्दधिक्षीरान्वितैस्तदा ।। 23

मध्ये वेद्यां महादंवपात्रं गौर्याश्च भासुरम् ।
रत्नमुक्ताविचित्रेण रङ्गवल्लया विराजितम् ।। 24

रत्नदीपमहास्तम्भैः पर्यन्तेष्वप्यलङ्कृतम् ।
त्रिपदीमौलिभागस्थरत्नपात्रद्वये तदा ।। 25

देवस्य देव्या रुचिरं भक्ष्यभोज्यविराजितम् ।
सिह्मासनद्वयं तत्र रत्नपर्यङ्क(पर्यन्त)भासुरम् ।। 26

निधाय गिरिराट् तत्र सुरानाहूय तान् गणान् ।
मुनीनन्यान्गणांस्तत्र प्रतिपात्रं न्यवेशयत् ।। 27

हिम(हेम)चित्रेषु पीठेषु सन्निवेश्यानुपूर्वशः ।
सुस्नातांस्तान् सुवसनानाचान्तान्गन्धभूषितान् ।। 28

भृङ्गारकलशोपेतानास्थितान् पङ्क्तिशः सुरान् ।
वामदक्षिणपार्श्वेऽथ महेशस्य हरिर्विधिः ।। 29

न्यवेशयद् गिरिश्रेष्ठो मुनिपङ्क्तौ मुनीश्वरान् ।
शक्रादीनां सुराणां च पङ्क्तौ तान् सुरसत्तमान् ।। 30

नन्दिकेशादिगणपाः स्वगणैः पङ्क्तिशः स्थिताः ।
गिरयोऽपि स्वपङ्क्तिस्था अग्रेकृत्वा हिमाचलम् ।। 31

मैनाकमनु ते सर्वे संस्थिता विष्टरेष्वथ ।
देवाङ्गनागणानां च पङ्क्तयो मुनिपङ्क्तयः ।। 32

प्रावृतान्तर्गृहे तत्र मेनया गिरिपत्निभिः (?)
रङ्गवल्यादिरचितदीपस्तम्भैरलङ्कृते ।। 33

पात्रेषु भक्ष्यभोज्यान्नपूर्णेष्वथ सुवाससः ।
सर्वाङ्गभूषणोपेता निशाकुङ्कुमभूषिताः ।। 34

सल्लापालपकुशला अन्योन्यं चक्रिरे कथाः ।
हेमपीठेषु लभ्म्याद्या शचीवाण्यादयोऽङ्गनाः ।। 35

अरुन्धतीमुखास्तत्र सुयशाद्या गणाङ्गनाः ।
मेनया पूजितास्तत्र संस्थिताः कलशैर्युताः ।। 36

देवानुपाविश्यगिरिर्महेशं प्राञ्जलिस्तदा ।
उवाच गौर्या सहितं रत्नमञ्चस्थमीश्वरम् ।। 37

**गिरीश्वर उवाच -**

देवाः समागताः सर्वे तवैवाज्ञाकरा गणाः ।
मुनयः सह पत्नीभिः सुराणां गणपाङ्गनाः ।। 38

मेनया संस्थिताः सर्वे पूजिताश्च यथाविधि ।
पङ्क्तिशः संस्थिताः सर्वे पङ्क्तिपात्रेषु शाङ्कराः ।। 39

महादेवं प्रतीक्षन्ते गौर्या भोक्तुं सजग्धिनः । (?)
हृत्तमोनाशकं शम्भो तव नैवेद्यमुत्तमम् ।। 40

त्वन्नैवेद्यप्राशनेन मुक्तिर्भवति शङ्कर ।
इत्युक्तो गिरिवर्येण महादेवोऽम्बया सह ।। 41

अक्लिष्टवाससा युक्तो भूषणैर्मण्डिताङ्गकः ।
मकुटोद्भासि चन्द्रांशुधवलीकृतदिङ्मुखः ।। 42

त्रिपुण्ड्रगन्धरेखाङ्को गन्धपुष्पैरलङ्कृतः ।
चामरैर्वीजितो गौर्या सर्वाभरणभूषया ।। 43

पादुकामधिरुह्याथ छत्रछन्नमुखाम्बुजः ।
स ययौ सुरपङ्क्तिं तां प्रणाममुखरोत्थिताम् ।। 44

आलोक्य परितः प्रीति पूर्णाक्षः स सुरान् गणान् ।
मुनीनथ गिरीन् सर्वान् देव्या वेद्यां वरासने ।। 45

निषसाद महादेवः सीदतेत्यब्रवीच्च तान् ।
शिवाज्ञया ततः सर्वे यथापूर्वं व्यवस्थिताः ।। 46

ब्रह्मविष्ण्वादयो देवा गणा मुनिगणास्था ।
रत्नभृङ्गारकलशजलैः शीतलगन्धिभिः ।। 47

देवीकरस्पर्शपूतैः संप्रोक्ष्य परिषिच्य च ।
गौर्या स बुभुजे शम्भुर्गणेशैः परिवीजितः ।। 48

देव्याः सखीगणैस्तत्र वीजिता सा महेश्वरी ।
शिवनैवेद्यशेषं तद् धिक्कृतामृतमुत्तमम् ।। 49

बुभुजे सा तदा गौरी वरान्नं परया मुदा ।
अनुज्ञाताः सुरास्तत्र मुनयो गिरयो गणाः ।। 50

बुभुजुः शिवनैवेद्यं गिरिराजेन पूजिताः ।
मेनापि बुभुजे देवमुनिपत्नीसमन्विता ।। 51

न कश्चिद् व्याजहारेशसन्निधौ पङ्क्तिसंस्थितः ।
परिवेषकरास्तत्र सञ्चरन्ति सदा स्त्रियः ।। 52

हेमभाण्डरत्नपात्रीकरा दर्वीकरास्तथा ।
भक्ष्यभोज्यकरास्तत्र* सोष्पान्नक्वथिताकराः ।। 53

पानकाऽपूप भक्ष्याज्यकराः क्षीरकरास्तथा ।
रसवन्मोदकापूपफलपात्रकरास्तथा ।। 54

कदलीपनसाम्रादिकरास्तत्र वरस्त्रियः ।
सुशीतपाटलोशीरगन्धिताम्बुकरास्तथा ।। 55

परिवेषकराः सूदा युवानो मृष्टकुण्डलाः ।
रणन्नूपुरपादाश्च कङ्कणाङ्गदभूषणाः ।। 56

सञ्चरन्ति स्त्रियः पङ्क्तौ सङ्घशस्तडिदुज्ज्वलाः ।
प्रतिपात्रं समुद्वीक्ष्य यद्भोज्यं यस्य यत्प्रियम् ।। 57

---

* सोष्णान्नपात्रवहनक्वथितात्मकरास्तदा । इति पाठः सङ्गतो भाति ।

*मनसा चिन्तनादूर्ध्वं तत्पात्रे तत्क्षिपन्त्यपि ।
न चावज्ञायते कश्चित् स्त्रीभिर्वा सूदसत्तमैः ।। 58

गृह्यतामन्नभोज्यादि श्रीमद्भिर्यद्यदिष्यते ।
इति सूदा वदन्त्येव प्रतिपात्रं सहस्रशः ।। 59

त्रिंशत्त्रिकोटिदेवाश्च मुनीनां कोटयो नव ।
गणानां पञ्चकोट्योऽथ स्त्रीणां कोटित्रयं तथा ।। 60

गिरीणां षष्टिसाहस्रं रुक्मपात्रेषु भुञ्जते ।
तदा मुदा गिरिश्रेष्ठो वाचमूचे विनीतवत् ।। 61

**गिरिरुवाच -**

यद् वैष्णवे तथा ब्राह्मे यत् शाक्रे चामरालये ।
तदस्तु भोज्यं सर्वेषां प्रीतितृप्तिकरं मम ।। 62

मयि प्रीत्याद्य सर्वेऽपि शिवनैवेद्यमुत्तमम् ।
अवज्ञया वाऽऽलस्येन दत्तं यत् क्षन्तुमर्हथ ।। 63

**स्कन्द उवाच -**

इति तत्र गिरेर्वाक्यं श्रुत्वा ते मुनिसत्तमाः ।
ऊचुः सर्वे मुनिश्रेष्ठा गणाः सुरगणैः सह ।। 64

अहो धन्या वयं सर्वे धिक्कृतामृतमुत्तमम् ।
महादेवस्य नैवेद्यं शिवस्य परमात्मनः ।। 65

भुक्तवन्तो मुक्तियुक्ता महेशे भक्तिरस्तु ते ।
धरणीधृग्वरोऽसि त्वं ब्रवीषि मधुरं वचः ।। 66

---

* तत्तत् क्षिपन्ति तत्पात्रे मनसा चिन्तितक्षणे । इति पाठः ।

न ब्राह्मे न च वैकुण्ठे न शाक्रे भोज्यमीदृशम् ।
इति संतर्पिताः सर्वे शिवाग्रे सुरसत्तमाः ।। 67

तदानीं नारदो वाक्यमवादीद् भृशहर्षितः ।। 68

**नारद उवाच -**

शम्भो भर्ग महेश्वरेश्वर महादेवेश विश्वाधिक
विश्वाशास्य दयानिधे श्रुतिशतैरुद्धोषितोऽन्नप्रदः ।
तेनैवाद्य सुतृप्तदीप्तसुरता धन्यैर्मुनीन्द्रैर्गणै-
र्नान्यत्र प्रविशामहे(?)तव कृपापूर्णाः प्रमोदामहे ।। 69

नित्यं मङ्गलमस्तु मे प्रतिपदं हे मङ्गलायाःपते ।
इत्युक्तं मुनिना तदा मुनिगणाः श्रुत्वा वचोहर्षिताः ।
देवास्ते गणपाः शिवेन शिवया उत्तस्थुरीशाज्ञया
संप्रक्षाल्य पदद्वयं च वदनं हस्तौ तदा शर्करा-
क्षीरापूपरसैकलग्नमनसस्ते भूसुरास्ते गणाः ।। 70

दिव्यं तां विविशुः सभां द्युतियुता वस्त्रैस्तथा भूषणैः
बद्धोष्णीषकिरीटकुण्डलधरास्तस्थुस्तदा ते सदा ।
नासम्बाधमवस्थिताश्च सुमुखा लेखा महेशोन्मुखा
मान्यास्ते गणपुङ्गवाश्च मुनयः सिह्मासनस्थं शिवम् ।।71

गौरीं चापि तदातिसुन्दरमहापर्यङ्कसंस्थां सुरा
नेमुस्तत्र शशाङ्कदीधितिधरं सच्चामरैर्वीजितम् ।
वीक्षन्ते त्रिदशा महेशवदनं नृत्येषु त्यक्तादरा
तत्रातोद्यसुनर्तिताप्सरवरसाहस्रमत्युद्भुतम् ।।(?) 72

तालोत्थाहतितन्त्रियन्त्रितनटनृत्तार्भटीमेदुर-
रङ्गभ्राजितरम्यवेणुनिनदैः सन्मद्दलानां स्वनैः ।
भ्राजद्रत्नपरिष्कृतामरसभाधिक्कारिणीतत्प्रभा-
राजत्येव सभापतेः प्रमुखतो धूपालिदीपप्रभा ।। 73

मेना चापि मुदान्विता सुरमहाभामायुता पूजिता
ताम्बूलामलपुष्पगुच्छविलसद्धम्मिल्लमालायुता ।
रम्भाद्यप्सरसां नटज्झणझणारावैकनृत्तादरा
वासोभिः सुनिशा सुकुङ्कुमवरैः सम्पूज्य तास्तास्त्रियः।।74

**सूत उवाच -**

एवं वर्षमहर्निशं स गिरिराट् सम्पूज्य सर्वामरान्
विप्रान् तद्गणपान् सदारसहितान् माद्यन्नुवासादरात् ।
शम्भुं तां जगदम्बिकां गिरिवरैर्युक्तः स मुक्तोऽभवत्
व्यक्तं भक्तिविभावितात्महृदयो नान्यद्विजानात्ययम् ।। 75

।। इति श्रीशिवरहस्ये द्वादशाम्शे सुरभोजनवर्णनं नाम
एकोनविंशोऽध्यायः ।।



## ।। विंशोऽध्यायः ।।

**स्कन्द उवाच -**

एवं स्थितं तदा वीक्ष्य त्र्यक्षं गिरिजया सह ।
भूधरेणार्चितं देवैः सुरकार्यार्थमुद्यतः ।। 1

वासुदेवो गिरिश्रेष्ठं रहसि स्वैरमब्रवीत् ।

**विष्णुरुवाच -**

धन्यो मान्योऽसि गोत्रेश कृपापात्रं महेशितुः ।। 2

तव भाग्यस्य नान्तोऽस्ति यतस्त्वं शङ्करार्चकः ।
किन्तु मे साम्प्रतं वाक्यात्सुराणां हितमाचर ।। 3

इयं गौरी तव सुता जाता माया महेश्वरी ।
यस्यामुत्पद्यतेऽस्माकं कुमारः सैन्यपालकः ।। 4

न मया च सशक्रेण सुरैश्चासुरसूदनैः ।
विजेतुं शक्यते दैत्यस्तारकः शूरसंयुतः ।। 5

स कोट्यक्षौहिणीयुक्तष्षट्कोटितुरगावृतः ।
पञ्चकोटिगजैर्युक्तो नवकोटिरथावृतः ।। 6

ब्रह्मदत्तवरो दैत्यः सन्नद्धकवचायुधः ।
नान्येन समरे जेतुं शक्तिहस्तं विना गिरे ।। 7

शिवो विहरतु स्वैरं कैलासे वा सुमन्दिरे ।
क्षिप्रं देव्या महादेवस्तदेतज्जगतां हितम् ।। 8

कर्तुमर्हसि साहाय्यं तमनुज्ञातुमर्हसि ।
न त्वं वियोगजं देव्या दुःखं सोदुमिहार्हसि ।। 9

चिरं कन्या पितृगृहे नापि वस्तुमिहार्हति ।
शिवेन प्रेषयास्माकं हितार्थं भूधरोत्तम ।। 10

तदा विष्णुवचः श्रुत्वा हिमवानाययौ गृहम् ।
लोकप्रामाण्यहेत्वर्थं कन्यादानं प्रदर्शितम् ।। 11

गृहप्रवेशनीयागं चक्रे कर्मविधानवित् ।
मुकुटैर्भूषणैश्चित्रैर्गन्धपुष्पैर्गिरीश्वरः ।। 12

प्रणम्य पूजयामास गौरीशङ्करमेव च ।
सास्राक्ष्या मेनया कन्यां ददौ हस्ते हरस्य तु ।। 13

नृत्यन्त्यप्सरसां सङ्घा जगुर्गन्धर्वनायकाः ।
ववृषुः कुसुमासारं मेघास्ते घोषवत्तरम् ।। 14

गिरिराजेन देवेशः सुरैर्द्विजगणैर्गणैः ।
स्वच्छछत्रावृतमुखो वीज्यमानश्च चामरैः ।। 15

गौर्या तदा मेनया च विष्णुब्रह्मगिरिव्रजैः ।
स्तुवत्सु वेदसङ्घेषु संस्तवं परमेशितुः ।। 16

नन्दिनो हस्तमालम्ब्य सर्वालम्ब्योऽपि शङ्करः ।
चन्द्रांशुधामकोटीरप्रभाभावितदिङ्मुखः ।। 17

हव्यवाहस्फुलिङ्गोर्ध्वनयनोद्यत्प्रभायुतः ।
प्रभाकरकरभ्राजन्नयनध्वस्तदिक्तमः ।। 18

वृषं महागजं चक्रे चतुर्दन्तं सुपाण्डरम् ।
ककुत्तस्याभवत् कुम्भौ सास्ना कर्णात्मतां गता ।। 19

घण्टाङ्कुशः कुथाऽऽस्तीर्णं रत्नचित्रपरिष्कृतम् ।
रत्नभ्राजितकक्षाग्रमुक्तागुच्छविराजितः ।। 20

पादरक्षैर्गणेन्द्रैश्च वीरभद्रादितण्डुभिः ।
हरिब्रह्मादिहस्ताब्जालम्बिदन्तस्य दन्तिनः ।। 21

वामदक्षिणभागस्थौ गजवर्यस्य तौ हरी ।
विराजेते विधिः पश्चात्सुरासुरगणैः सह ।। 22

नीराजितो गिरिस्त्रीभिः रत्नमुक्ताक्षतादिभिः ।
नदत्सु गजभेरीषु(?) पणवानकगोमुखैः ।। 23

मृदङ्गशङ्खपटहकाहलानां च निःस्वनैः ।
नन्दिनोत्सारितसुरो महादेवो वृषध्वजः ।। 24

पुरो यायिभिरत्युग्रैः खड्गहेतिधरैर्गणैः ।
नृत्यत्स्वप्सरसां सङ्घेष्वारुह्याथ वृषं तदा ।। 25

गजाकृतिं महादेवो रत्नमण्टपपृष्ठगम् ।
पताकावलिविभ्राजन्नागकुम्भाग्रमुन्नतम् ।। 26

रत्नपङ्कजमालाढ्यं गौर्या साकं महेश्वरः ।
केदारेशालयं तत्र प्रदक्षिणमुपाययौ ।। 27

स्तुवन्ति देवमुनयो वेदास्तत्र महेश्वरम् ।। 28

**वेदा ऊचुः -**

भजाम यामिनीधवप्रियोत्तमाङ्गसङ्गत
स्फुरत्करपर्दगाङ्गजोल्लसत्परागरागिणम् ।
नगप्रियात्मदारिकां स्वभक्तपापहारिकां
सुमेनकाकुमारिकां भजामहे कुमारिकाम् ।। 29

विश्रम्य विश्रम्य तदा मुदा हरः
सुरैर्गणेन्द्रैश्च सुपङ्क्तिशः स्थितैः ।
रम्भादिसंरम्भकृतोरुनृत्तं
विलोक्य विश्रा(व्यश्रा)मयदम्बरे तदा ।। 30

ताम्बूलपुष्पैर्वरचन्दनैश्च
सर्वान् प्रपूज्याथ मुदा गिरीन् सुरान् ।
गणेश्वरान् वीजितचामरौघ-
स्तदा ययौ वाद्यरवैर्महेशः ।। 31

स पारिबर्हं प्रददौ भवान्याः
गिरीश्वरोऽयं प्रमुदे पिता धनम् ।
सुवर्णमुक्तामणिपद्मराग
सपुष्परागं वरहीरकं च ।। 32

प्रवालवैडूर्यमणीन्द्रनील-
गोमेदसन्मारकतादिगर्भम् ।
तुलामनालक्ष्य सुसङ्ख्ययागिरि-
र्विभूषणान्यव्यतिरत्नसौभगम् ।। 33

दिव्याम्बराणां वरलक्ष्यसङ्ख्यं
निशादिसत्कुङ्कुमरोचनाढ्यम् ।

दासीगणानां च सहस्रकं तथा
स यौवनोन्मादविभूषितं च ।। 34

गजाश्वगोवृन्दमहो सवत्सं
रथाङ्गसङ्घं सपताकसाश्वम् ।
सहस्रशस्तत्र ददौ गिरीन्द्रः
कन्याधनं मानधनो गिरीशे ।। 35

मुदा तदोचुर्मुनयो गिरीश्वरा
तुष्टान्तरङ्गं च गिरीश्वररं तम् ।
धन्योऽसि मान्योऽसि सदा महांस्त्वं
हिमाचलो भक्तियुतोऽसि गौर्याम् ।। 36

देदीयते कनकदण्डविराजितैश्च
सच्चामरैः प्रचलकुण्डलसुन्दरीभिः ।
दिव्याङ्गनाः स्तनविराजितभूषणाश्च
कृत्वा नु चामरयुता वरवस्त्रयुक्ताः ।। 37

वर्षन्ति मोदमुदिताः पुरुहूतहूता
मेघा अमोघहृदयाः सुमना(कुसुमा)लिभिस्ते ।
द्योतन्ति ऋक्षाणि ग्रहाश्चकासति
समीरणो वाति सुगन्धिशीतलः ।। 38

प्रदक्षिणार्चिर्ज्वलतीह वह्नि-
र्लेखा महेशानपदाब्जसन्मुखाः ।
ययुस्तदा मन्दरकन्दरोरु-
सौधं सुरम्यं शशिशेखरस्य ।। 39

भ्राजत्पताकावलिशातकुम्भ-
कुम्भैश्च शोशुभ्यदिवार्कबिम्बैः ।
सुरम्यरत्नावलितोरणौघै
र्गणैः स्वहस्तोद्धृतलाजवर्षैः ।। 40

प्रविश्य गौर्या सहितो महेशो
महासभां प्राप्य सुरत्नचित्रिताम् ।
सुरानुपावेशयदासनेषु
मुनीन् गिरीन्द्रांश्च स दारयुक्तान् ।। 41

गजाननं पूज्य सपर्यया शिवो
गौर्या गणेन्द्रैः प्रतिपूज्य सर्वान् ।
गन्धाक्षताभिश्च सुवाससां भरैः
पुष्पादिताम्बूलवरैः प्रहर्षितान् ।। 42

चकार नृत्योत्सवलोकनेन
सर्वानशेषान् हर एव तत्र ।
परेद्युरामन्त्र्य गणैः सुरैर्द्विजै-
र्गिरीन्द्रसङ्घैश्च तदङ्गनाभिः ।। 43

भक्ष्यैश्च भोज्यान्नवरैश्च पङ्क्तौ
स भोजयामास मुदा गिरीन्द्रान् ।
एवं च मासाध्युषिताः सुखेन
सुरा द्विजास्ते गिरयो गणाश्च ।। 44

प्रणम्य याताः स्वगृहेषु तर्षिताः
हराज्ञया ते विविशुः स्वधाम ।
मेना तदा भूधरनायकेन
मैनाकयुक्ता प्रययौ हिमाचलम् ।। 45

महेश्वरश्चापि गणेन्द्रयुक्तो
गजाननेनापि मुदास्त गौर्या ।
विराजिते सौ धवरे महर्षिभि-
स्तत्कन्दरे सुन्दरपुष्पशाखिभिः ।। 46

तदा प्रणम्य प्रसभं महेश-
मुवाच भक्तो घटजो महेश्वरम् ।
. कल्याणशैलधनुषं महिषीसमेतं
कल्याणयुक्तवपुषं हृदये दधामि ।। 47

सदा मुदा मद्धृदये वसेश
वियोगभीतः प्रकरोमि किं ते ।

**स्कन्द उवाच -**

तदा महेशो घटजं जगाद
वसैव भूमौ विहरस्व कामम् ।। 48

क्षेत्रेषु ते दर्शनमेतदेव
भवेत्सदा याहि ममाज्ञया द्विज ।
नत्वा महेशाब्जपदं भवानीं
ययौ मुनीन्द्रोऽथ सदक्षिणाशाः ।। 49

विन्ध्यं प्रशाम्याथ मुदा महेशं
कल्याणवेषं समपश्यदञ्जसा ।
क्षेत्रेषु वेदाभिधकानने हरं
श्रीसुन्दरे शैलवरे महेशम् ।। 50

नत्वाऽवसन् तेऽपि सुरेन्द्रसङ्घाः
कुमारजन्म प्रसमीक्ष्य संस्थिताः ।
ये वा पठन्ति निखिलार्थकरं महेश-
गौरीविवाहमुभयोश्च गृहप्रवेशम् ।
ते मङ्गलापतिकृपां समवाप्य लोके
कल्याणपङ्क्तिमुपयन्त्यपरत्र मुक्तिम् ।।

।। इति श्रीशिवरहस्ये द्वादशांशे
मन्दरगमनं नाम
विंशोऽध्यायः ।।



## ।। एक विंशोऽध्यायः ।।

**स्कन्द उवाच -**

तदा मन्दरशैले तु शैलेन्द्रसुतया शिवः ।
नन्दि भृङ्गिमहाकालचण्डिकेशादिभिर्गणैः ।। 1

गजाननेन स मुदा सेवितो वृषकेतनः ।
उवास मणिसौधेषु विहारशयनासनैः ।। 2

भक्ष्यभोज्यैर्महादेवं सेवन्ते परमेश्वरीम् ।
रत्नव्यजनहस्ताग्रा पर्यङ्के तमवीजयत् ।। 3

मणिदण्डाग्रधवलैश्चामरैरपि कोमलैः ।
फलालिवरपात्रैश्च मधुमैरेयदानतः (?) ।। 4

दिव्याङ्गरागगन्धैश्च पुष्पाभरणसेवनैः ।
प्रासादतलसञ्चारैः सुरम्यवनदर्शनैः ।। 5

हंससारसचक्रं च कोकिलाशुकशारिकाः ।
शिखण्डिताण्डवं पश्यन् विजहार ऋतून् बहून् ।। 6

डोलान्दोलक्रीडाभी रत्नमञ्चेषु तौ शिवौ ।
प्रमोदमापतुः स्वैरं शिवौ हल्लीसलास्यकैः ।। 7

कन्दुकक्रीडनरतौ अक्षैर्दीव्यतुरीश्वरौ ।
मन्दरापारशिखरे वृषेशमधिरुह्यतौ ।। 8

गजाननेन गणपैः सेवितौ नन्दिना मुदा ।
शिखराणि विलोक्याथ ननन्दतुरुमाशिवौ ।। 9

क्वचित्प्रफुल्लसालाग्रं क्वचित्तालरवाकुलम् ।
क्वचिदाताम्रशाखाग्रसहकारवनावृतम् ।। 10

क्वचित्प्रफुल्लवल्लीभिर्मल्लीभिः पुष्पितं क्वचित् ।
क्वचिद्दाडिमरक्ताभफुल्लपुष्पविराजितम् ।। 11

तमालकुलनीलाच्छपुष्पगुच्छयुतं क्वचित् ।
क्वचित्कदम्बनिबिडगुच्छगुञ्जदलिव्रजम् ।। 12

पलाशकाशगुच्छाग्रैः कर्णिकारककोरकैः ।
शोभितं निबिडछायं कोकिलारावसुन्दरम् ।। 13

भ्रमन्मतङ्गसारङ्गविहङ्गविरुतं क्वचित् ।
बिल्वामलक्यजम्बूभिः संवृतं वेणुगुल्मकैः ।। 14

वनसूकरदंष्ट्राग्रविदारितधरातलम् ।
मातङ्गमदधाराभिः सिक्तभूतलसंयुतम् ।। 15

उत्पुच्छचामरकुलैर्वीजितं गन्धितं सदा ।
कस्तूरिकामृगभ्राम्यद्गन्धकेतकमारुतम् ।। 16

मयूरपक्षविक्षिप्तपतच्चन्द्रकभूतलम् ।
गन्धर्वकिन्नरानीकगानासक्तमृगाकुलम् ।। 17

वल्मीकोर्ध्व(काग्र)फणाभ्राजन्मुखफूत्कृतमारुतम् ।
उत्फुल्लहल्लकैः पद्मैरुत्पलैः सरसीगणैः ।। 18

संवृतं गैरिकाक्रान्तनानावर्णवृतं गिरिम् ।
चन्द्रिकां शारदां प्राप्य पुलिनेषु महेश्वरः ।। 19

कालिन्दीगिरिनद्यास्तु तटे मारुतशोभिते ।
सेव्यमानो गणैस्तत्र चिक्रीड गिरिजायुतः ।। 20

देवमानेन तद्वर्षं निनाय परमेश्वरः ।
देवास्ते तारकारातिसेनाभिः परिपीडिताः ।। 21

विष्णुब्रह्मादिभिर्देवैः शक्रेण गुरुणा युताः ।
केदारेशं पूजयन्तः संस्थिताः कालवीक्षकाः ।। 22

महेश्वरं प्रार्थयन्ति सेनापतिसमुद्भवे ।। 23

**देवा ऊचुः -**

जय जय देव महेश दयावनलोलदृशा परिपाहि विभो
तारकहारक सङ्गयुतोद्भवकारणशङ्कर पाहि सदा।।24

जय जय पन्नगभूषणसन्नगवाससदाशिव पालय नः ।
तारकजन्य सुसम्भ्रमखेदमपाकुरुतात् करुणालय नः।। 25

जय जय विभ्रमविनोदनदक्ष यमान्धकसूदन पाहि दृशा ।
तारकसङ्गरपातकहर वरसुरतामुद्धर भूरिकृप ।। 26

जय जय विश्वविधायकसायक पापनिवारक पाहि सदा ।
तारकजन्यविषादविनाशक शशधरशेखर पाहि सदा ।।27

जय जय हे महेश्वर शङ्कर कुरकुरु करुणां शशिमौले ।
तारकसैन्यविदारणसारशरासनधारक मारसम ।। 28

जय जय पाहि मुदा करुणाकर दुस्तरतारक दुःखकुलम्।
पापमपाकुरु करुणां कुरु शिव पाहि सदाशिव देवकुलम् ।।

इत्थं देवस्तुतिं श्रुत्वा क्रीडन् देव्यास्त शङ्करः ।
शतवर्षं हरस्तत्र मन्दरे चारुकन्दरे ।। 30

ऊर्ध्वरेता विरूपाक्षस्तदाग्निं द्वारसंस्थितम् ।
प्रवेशयेति होवाच नन्दिनं गणसत्तमम् ।। 31

ततः स प्राञ्जलिर्वह्निर्बिभ्यदागान्महेश्वरम् ।
विनयावनतस्तस्थौ देव्या रूक्षैकवीक्षणैः ।। 32

निर्दग्धोऽपि हरिप्रीत्या तमवोचन्महेश्वरः ।

**शिव उवाच-**

देवानां कार्यसिध्यर्थं मद्रेतो रुक्मसन्निभम् ।। 33

वह पातय गङ्गायां वह्ने माभीतिमावह ।
इत्थं शम्भोर्वचः श्रुत्वा तदाग्निः प्राञ्जलिः स्थिताः ।। 34

अपातयन्महादेवो हिरण्याभं महेश्वरः ।
अग्निरप्यतितप्तोऽभूत् श्रमेण महता युतः ।। 35

गङ्गाद्वारे शरवणे तदपातयदञ्जसा ।
तदा गङ्गाशरवणं समभूत्काञ्चनप्रभम् ।। 36

रेतो महेश्वरस्येदं प्रावहत्तदितस्ततः ।
तत्प्रान्तशैलाः सर्वेऽपि सन्दीप्तास्तत्प्रभावतः ।। 37

दृष्ट्वा ब्रह्मादयः सर्वे ययुस्तत्रैव विष्णुना ।
तदेकत्र कृतं देवै रेतो माहेश्वरं तदा ।। 38

षडास्यो द्वादशभुजो द्विपाद् द्वादशलोचनः ।
संवृत्तपीनकौमारं वपुरासीद्धिरण्मयम् ।। 39

षट्कृत्तिकाः समागम्य मुदा स्तन्यमपाययन् ।
ववृषे कुसुमासारो देवास्तूर्याण्यवादयन् ।। 40

जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।
जेपुर्महर्षयो मन्त्रान् रक्षोघ्नान् तत्र सर्वशः ।। 41

विश्वकर्मा समागम्य कुमारं भूषणोज्ज्वलम् ।
धनाधिपतिदत्तेन रत्नजालेन तं तदा ।। 42

अभूषयत्तदङ्गेषु मोदादापादमस्तकम् ।
षड्वक्त्रमकुटान्येव कुण्डलानि तदा मुदा ।। 43

कनकाङ्गदकेयूरग्रैवेयाण्यपि तत्र वै ।
काञ्चीं सुरत्नखचितां मणिजालकितान्तराम् ।। 44

रणन्मञ्जीरपादाब्जं चक्रे तत्र सुभूषणैः ।
विरजाम्बरभूष्यं च रक्तगन्धानुलेपितम् ।। 45

देवपुष्पोरुमालाभिः परिभूषितविग्रहम् ।
दक्षःपितामहः शक्तिं हव्यवाहः शरावरम् ।। 46

विष्णुश्चक्रं दैत्यहन्तृ ददुर्देवा मुदा तदा ।
कुमारोऽयं च सेनानी राग्नेयो वरषण्मुखः ।। 47

ददौ दानानि भूरीणि गोहिरण्यघनानि च ।
धनं धान्यं च विप्रेभ्यो जातहर्षास्तदा सुराः ।। 48

तारकस्यापशकुनान्यासंस्तत्र सहस्रशः ।
खात्कबन्धः पपातोर्व्यां विद्युत्तस्यापतत् गृहे ।। 49

सरजस्को ववौ वायुः सधूमाङ्गारदारुणाः ।
शाम्यन्ति चाग्नयस्तत्र ग्रहयुद्धमभूत्तदा ।। 50

तदा स काव्यस्य गिरा शीतं चक्रेऽथ तारकः ।
श्रुत्वा कुमारजन्मैतद्धृदयेन विदूयता ।। 51

सुसन्नह्य तदासेनाः प्रशशास त्रिविष्टपम् ।
विष्णुब्रह्मादयो देवास्तुष्टुवुस्तं प्रणम्य च ।। 52

शताष्टनामभिस्तत्र त्रिपुरारितनूभवम् ।
षण्मुखः सुमुखस्त्राता लेखसेनापतिः प्रभुः ।। 53

शक्तिहस्तो दुराधर्षो वीतिहोत्राङ्गजो बली ।
क्रौञ्चाद्रिमथनो योगी सुब्रह्मण्यो मखेडितः ।। 54

गाङ्गेयो वैद्युतोऽमोघस्तारकान्तकरो रविः ।
महासेनो देववैद्यः प्रणवार्थप्रकाशकः ।। 55

महासेनः शरवणोद्भवो भवसुतोऽनघः ।
विनायकानुजः श्रीमान् शूरसंहारकारकः ।। 56

सेनानीर्दुर्दुरो वीरो गर्भो विश्वपतिः कविः ।
गुरुर्हरिहयः शास्ता शरासनकरः शरी ।। 57

व्यापकोऽनन्तशक्तिः सुकुमारः प्रोज्ज्वलाङ्गकः ।
वीराबाहुर्गणाद्यक्षस्त्र्यक्षप्रीतो विशारदः ।। 58

कान्तः शान्तो जितरातिरुमाकान्तात्मजोऽपरः ।
*वल्लीपतिर्जितारातिः कुक्कुटोत्तमकेतनः ।। 59

शिवलिङ्गार्चनप्रीतो गन्धपुष्पाद्यलङ्कृतः ।
मुकुटी चाङ्गदी चक्री गदी शङ्खी शिखी जटी ।। 60

सनातनपरस्तारस्तारकस्तारकान्तकृत् ।
संवर्तो यौवनी वीरो बालो लीलाविनोदकृत् ।। 61

प्रसन्नाक्षः पङ्कजाक्षः शम्बरः शम्बरप्रियः ।
सुपल्लवः शिवो धन्वी खड्गखेटधरः स्तुतः ।। 62

विश्वप्रियोऽनन्तशक्तिः सुराध्यक्षो दुरासदः ।
प्रमोदो मेघदमनः शक्रपूज्यः शतक्रतुः ।। 63

कृत्तिकासूनुरमलः कृत्तिवासःप्रियो विराट् ।
स्वाहाप्रियः कार्तिकेयो हरणो(?)वेगवत्तरः ।। 64

स्वर्णवर्णः पारिभद्रस्ताम्रस्तारणकारकः ।
सुपुष्करमहामालो ललिताङ्गः सुरावनः ।। 65

यशस्करोऽमरपरो गीतवान् तत्प्रियोऽर्तिहा (?) ।
वीरभद्रमहागर्वस्तम्भनस्तत् परः सखा ।। 66

---

* जातमात्रस्य स्कन्दस्य अष्टोत्तरशतनामभिः स्तुतिविषये तद्भाविकालिकवृत्तान्ताधिकृतनामसङ्ग्रहणमसङ्गतमिव भाति । अतः शैशवे वर्तमानस्य स्कन्दस्य क्रौञ्चाद्रिमथन, तारकान्तकत्व, शूरसंहारकारकत्व वल्लीपतित्वादिविशेषणकथनस्य साङ्गत्ये ग्रन्थरचयितैव प्रमाणम् ।

निरञ्जनो निराधारः शक्रसेनापतिर्वटुः ।
ब्रह्मचारी गिरिचरः सर्परूपो दुरासदः ।। 67

षष्ठीप्रीतः कुमारश्च स्मरस्मेरास्यसुन्दरः ।
विज्ञानदः शिवो ज्ञानी शिवभक्तशिरोमणिः ।। 68

इत्येतैर्नामभिः स्तुत्वा नत्वा देवाः सवासवाः ।
जहृषुस्तत्कुमारं च शतपुष्करमालिकम् ।। 69

विमानेनार्कवर्णेन निन्युर्देवा महेश्वरम् ।
नदत्सु देवतूर्येषु नृत्यन्तीष्वप्सरःसु च ।। 70

वर्षत्स्वभ्रेषु कुसुमं सति गन्धर्वगायने ।
ते तदा मन्दरगिरिं सम्प्राप्य प्रमथाधिपम् ।। 71

प्रणम्यादितिजास्तत्र मुदमापुर्महेश्वरम् ।
दृष्ट्वा कुमारं माराभं गौर्या वीक्ष्याननं हरः ।। 72

मुमुदे स महादेव उत्थाप्यालिङ्ग्य शङ्करः ।
स्वाङ्कपर्यङ्कसंस्थं तं चकार परमेश्वरः ।। 73

तदा पञ्चमुखस्तत्राजिघ्रद्गौर्या षडाननम् ।
गौर्या सह महेशोऽपि तदा पञ्चदशाक्षिभिः ।। 74

पश्यन्ननिमिषैर्नेत्रैः सूर्येन्द्वनलशोभितैः ।
न तृप्तिमध्यगीष्टेशः शिपिविष्टात्मसम्भवम् ।। 75

गौरी स्रुतकुचास्कन्दं पाययन्ती स्वकं स्तनम् ।
गौरीकुचपयः पूरमपिबत्स षडाननैः ।। 76

तदा विवृद्धिमापेदे चन्द्रोदय इवाम्बुधिः ।
*स षोडशोनवर्षोऽभूद्यौवनोल्लासिताङ्गकः ।। 77

गौर्या स्कन्देन संयुक्तं गजाननिषेवितम् ।
रत्नसिह्मासनासीनं तुष्टुवुः प्रणताः सुराः ।। 78

**देवा ऊचुः -**

गौर्या स्कन्दगजाननेन सहितं त्वां वीक्ष्य मोदामहे
देवेशं जनरक्षणं शशिकलाभास्वत्किरीटोज्ज्वलम् ।
त्वामद्राक्ष्म पचेलिमेन तपसा देवाऽनिमेषेक्षणा-
तारार्तिप्रशमाय देव भगवन् सेनापतिं नः कुरु ।। 79

**सूत उवाच -**

इत्युक्तं सुरसायनं सुरवचः श्रुत्वैव हृष्टान्तरः
देव्या भद्रतरे सुखासनवरे संस्थाप्य तं षण्मुखम् ।
प्रोद्यद्रत्नसुकुम्भसम्भवजलैःसंस्नाप्य तं भूषणै-
राभूष्याम्बरगन्धपुष्पनिकरैरभ्यर्च्य देवैर्हरः ।। 80

तत्पाणिग्रहणाय ब्रह्मतनुजां वल्लीं च सेनां तथा
इन्द्रस्यापि तनूभवामथ भवः सम्भूष्य गौर्या तदा ।
कल्याणं समकारयत्सुरवरैः सेनाधिनाथं हरः ।। 81

मैनाकेन समभ्यगाद् गिरिवरो रत्नोरुभूषाम्बरै-
र्देवं तां गिरिकल्पकामथ मुदा पौत्रं कुमारं तथा ।

---

* ऊनषोडयषर्षोऽभूत् इति पाठः संगतः भाति ।

संवीक्ष्य(संपश्यन्)प्रमुमोद(मुमुदे)(प्र)हर्षनिकरैःसास्त्राविलाक्षो मुहुः
धन्योऽस्म्यद्य महेशपादभजनान्नान्यत्प्रमोदाय मे ।। 82

मेनापि सेनापतिमीक्ष्य(?) हृष्टा
पञ्चाननाज्जातमहो षडाननम् ।
आभूष्य रत्नाम्बरपट्टभूषणैः
शिवं शिवं चापि महोरुहर्षा ।। 83

।। इति श्रीशिवरहस्ये द्वादशाम्शे
कुमारसम्भवो नाम
एकविंशोऽध्यायः ।।



## ।। द्वाविंशोऽध्यायः ।।

**स्कन्द उवाच -**

ततश्च प्रार्थितो देवैर्गौर्या युक्तो महेश्वरः ।
तारशूरादिसंहारे विजयाय ममैव हि ।। 1

मूहूर्ते सुशुभे लग्ने ब्रह्मविष्ण्वादिभिः सुरैः ।
सुरानीकं समासज्य सुपताकं सुयोधकम् ।। 2

धृतनानाप्रहरणं सगणं रणसम्मुखम् ।
भेरीलक्षमहारावं शङ्खानककृतस्वनम् ।। 3

पटहानकगोश्रृङ्गैर्बधिरीकृतदिङ्मुखम् ।
रथानां कोटयस्तत्र समाजग्मुरलङ्कृताः ।। 4

सुपताका दृढाबन्धाः ससत्पति* हयावृताः ।
रथनेमिस्वनैस्तत्र तच्चक्रपरिवर्तनैः ।। 5

दशकोटितुरङ्गाणां रुक्मभाण्डखलीनकैः ।
मण्डितानां सुयोघानां प्रोद्दण्डोच्चण्डनिःस्वनैः ।। 6

गजानां सुमहामात्रयुक्तानां कोटिपञ्चकम् ।
समारूढगजारोहै रथानां पृष्ठतो गतैः ।। 7

कुथाङ्कुशाग्रदन्तोरुवेष्टनातिविराजितैः ।
कुम्भान्तावृतरुक्मोरुकवचालङ्कृतैर्गजैः ।। 8

---

* ससारथिहयावृताः - उत्तमसारथि, उत्तमहययुक्ताः ।

अत्यूर्ध्वसुपताकैश्च वर्षन्मेघाभनिःस्वनैः ।
त्रिंशत्त्रिकोटिदेवानां(देवैश्च)विविधायुधपाणयः(पाणिभिः)।।

प्रासासिमुसलोद्दण्डचण्डकोदण्डबाहुभिः ।
गदामुसल निस्त्रिंशकुन्तहेतिधरैः सुरैः ।। 10

खड्गखेटाङ्गुलित्राण कवचावृतदेहकैः ।
बद्धगोधाङ्गुलित्राणैरायसोष्णीषिभिः सुरैः ।। 11

कोटिसन्नद्धयोधैश्च भीषणायोधनोन्मुखैः ।
हेषारवैर्बृंहितैश्च रथनेमिस्वनैरपि ।। 12

नदतां कटुभेरीणां शङ्खानां निःस्वनैःसह ।
हरिरैरावतारूढः सन्नद्धकवचायुधः ।। 13

वज्रहस्तो मरुद्भिश्च समायतोऽमरैर्वृतः ।
वक्रदंष्ट्रं समारुह्य नक्रं स वरुणो गणैः ।। 14

समाययौ पाशधरै *सहस्राण्येकविशतिः(?)
यक्षाधिपो यक्षसङ्घैरुत्तुङ्गहयवाहनैः ।। 15

खड्गहस्तैर्दुराधर्षैरयुतैः समुपाययौ ।
निर्ऋतिर्हेतिहस्तैश्च रक्षसामयुतैर्ययौ ।। 16

गदासिभिण्डिपालोद्यत्हस्तैर्भीषणघोषणैः ।
अग्निर्मेषं वक्रश्रृङ्गं घनघोषं च श्मश्रुलम् ।। 17

सजलोद्दाममेघाभमधिरुह्य ययौ गणैः ।
लवित्रदातृहस्तैश्च नियुतै रक्तवर्णकैः ।। 18

---

* सङ्ख्यातीतैश्च वारुणैः ।

यमो यमगणैस्तत्र नीलाञ्जनसमप्रभैः ।
करालदंष्ट्रैर्विकटैरूर्ध्वकेशैर्ज्वलन्मुखैः ।। 19

पाशखड्गोरुहस्तैश्च षष्टिसाहस्रसङ्ख्यया ।
महामहिषमारुह्य रक्तनत्रोग्रश्रृङ्गकम् ।। 20

ऋभवः स्वगणैर्युक्ता ययुः सोमो गणैर्युतः ।
वायुरागात् गणानां च नियुतैः सायुधैर्वृतः ।। 21

विपाटपाटनाराचधारिभिर्बाहुशालिभिः ।
कुरङ्गं तं समारुह्य सन्नद्धः सर्वहेतिभिः ।। 22

ईशानोऽपि समारुह्य शाक्वरं च ककुद्मिनम् ।
रुद्रैः परिवृतोऽभ्यागात् कोटिसङ्ख्यैर्दुरासदैः ।। 23

अहिमन्युभिरत्युग्रैर्नदद्भिः सागरारवैः ।
निषङ्गिभिः कवचिभिः शरकार्मुकपाणिभिः ।। 24

विषदेवाः समायातास्तदैवायुतमुत्कटाः ।
रणशौण्डाः कवचितसप्रासासिकरास्तदा ।। 25

वसवः स्वगणैस्तत्र समायाता अगण्यकैः ।
विचित्रहेतिपरशु धारिभिर्दैत्यदारिभिः ।। 26

आदित्या द्वादश तदा समायाता गणैःसह ।
गदामुसलबाणासिधारिभिस्तेऽयुतायुतम् ।। 27

अश्विनावश्वमारुह्य समायातौ गणैर्वृतौ ।
प्रत्येकमष्टसाहस्रैः शरकार्मुकपाणिभिः ।। 28

पितरः सिद्धसाध्याश्च सुपर्णा गरुडास्तथा ।
गन्धर्वोरगरक्षांसि यातुधानाः सहस्रशः ।। 29

कवचायुधसारङ्गशृङ्गैर्मुसललाङ्गलैः ।
खड्गहेति(खेट)गदाहस्ता निर्ययुः समरे तदा ।। 30

सुधन्वानोऽयुतं तत्र स्यन्दनेषु सुधन्विनः ।
समायाता गणैस्तत्र सप्रासासिपरश्वथैः ।। 31

उष्णीषिणः कवचिनः सहस्तत्राणभासुराः ।
शरसन्त्राणकवचैर्धन्विनः सासिपाणयः ।। 32

अक्षैहिणीनां पञ्चाशत्कोटयोऽत्र समागताः ।
पताकालिवृताः सर्वे छत्रिणो वीज्चामराः ।। 33

अमराणामनीकानि मत्समीपमुपाययुः ।
पङ्क्तिशः स्वस्वनाथैश्च भैरवोद्दामभैरिभिः ।। 34

तदा मां स महादेवः स्वयमाबध्य दंशनम् ।
निषङ्गं च समाबध्य शक्तिं सासिं च मत्करे ।। 35

ददौ परश्वथं देवः पिनाकी स्वपिनाककम् ।
रथं सहस्राश्वयुतं चित्रध्वजपरिष्कृतम् ।। 36

हेमकुम्भवितानाग्रं सुसरथिशतावृतम् ।
शरावरसहस्रैश्च तूणीरैः पूर्णमीश्वरः ।। 37

समारोप्याथ गौर्या मां स्वस्ति वाच्य(?)मुनीश्वरैः ।
मङ्गलं प्रददौ मह्यं देवानां पश्यतां तदा ।। 38

महेश्वर उवाच -

यन्मया त्रैपुरे युद्धे क्ष्मास्यन्दनयुतेन हि ।
वेदाश्वविधियन्त्रा वा बाणा मुख्येन शौरिणा ।। 39

चन्द्रसूर्योरुचक्रेण यदाप्तं जयमङ्गलम् ।
तदस्तु समरे तात तवास्तु विजयोदयः ।। 40

अवहारो विहारे च शस्त्रास्त्रग्रामकर्षणे ।
स्वपरेक्षणदृष्ट्यां च संयाने चाप्यपोहने ।। 41

भूया अतन्द्रितो नित्यमित्यशान्मां हरस्तदा ।
तदाहं ब्रह्मविष्णुभ्यां शक्रेण च सहामरैः ।। 42

प्रणम्य गौरीमीशं च परिपूज्य गजाननम् ।
विश्राण्य जयदानानि महर्षिभ्यो मुनीश्वर ।। 43

नदतां घोरभेरीणां शङ्खानां ध्वाननैः सह ।
स्तुवतां वन्दिमुख्यानां जपत्सु च महर्षिषु ।। 44

वर्षत्सु सुमनोऽभ्रेषु नृत्यन्तीष्वप्सरःसु च ।
समारुह्याद्रिशिखरप्रभं रथवरं तदा ।। 45

ब्रह्मणा हंसयानेन दक्षिणे मे विराजता ।
वामे च गरुडारूढशङ्गिणा चक्रपाणिना ।। 46

पुरो गजेन महता धावता हरिणा सुरैः ।
प्रणामाञ्जलिपद्मानि त्रिदशानां प्रगृह्य च ।। 47

प्रगृह्य बन्दिरक्षां च देवसेनापते जय ।
अवासृजन्मदङ्गात्तु वीरबाहुमुखान् गणान् ।। 48

धृतनानाप्रहरणान् वारणेन्द्रसमप्रभान् ।
नवलक्षं शक्तिहस्तान् पृष्ठगोपान् ममैव हि ।। 49

रथचक्रस्वनैस्तत्र गजानां बृंहितैस्तदा ।
हेषाघोषमुखैरश्वैर्वल्गितास्फोटनिःस्वनैः ।। 50

स्तुवतां धावतां तत्र वातोद्धूतपताकिनाम् ।
पदातीनां पदोद्धूतरजांसि दिवमस्पृशन् ।। 51

अभाति भास्करस्तत्र सन्ध्यास्विव विलोहितः ।
एतस्मिन्नन्तरे तत्र नारदाच्छ्रुतवांस्तदा ।। 52

युद्धसन्नद्धमायान्तं देवसेनापतिं गुहम् ।
तारकः स्वबलैर्युक्तः समभ्यागाद्रणाङ्गणम् ।। 53

सप्तकोटितुरङ्गैश्च रुक्मभाण्डपरिच्छदैः ।
सोद्यतायुधनिस्त्रिंशप्रासहस्तैश्च योधकैः ।। 54

दन्तिनां च त्रिकोट्या तु सन्नद्धानां सुदन्तिनाम् ।
रथानां च सदश्वानां कोटिभी रथिभिर्ययौ ।। 55

सप्रासासिकोदण्डखड्गचापशरावृतः ।
विंशत्कोटिसुपादातैः कवचोष्णीषधारिभिः ।। 56

निषङ्गकार्मुककरैर्भल्लहस्तैर्महारवैः ।
सन्ताडय भेरीपटहान् पणवानकगोमुखान् ।। 57

सहस्राश्वरथं वेगात् तारुकः स्वयमास्थितः ।
सुपताकं सावरूथं(?)सुसारथिवरैर्युतम् ।। 58

शूरो गजं समारुह्य अङ्कुशाग्रकरो ययौ ।
पादाङ्गुष्ठेन तत्कर्णौ तुदन् मां वेगवत्तरम् ।। 59

सिह्मः स्यन्दनमारुह्य जवेन हेममालिनम् ।
खलीनचालनेनैव हयान् संचोदयन् द्रुतम् ।। 60

सुराणां दैत्यनाथानां युद्धमुन्मत्तमुत्थितम् ।
नदतां धावतां तत्र कूजतां धनुषां तदा ।। 61

शरणां वर्ष्यमाणानां निघ्नतामितरेतरम् ।
असिभिर्भिण्डिपालैश्च मुसलैर्लाङ्गलैस्तदा ।। 62

मुञ्चतां शरवर्षाणि खड्गखेटप्रहारणैः ।
शक्रो वित्रासयामास दैत्त्यान् तत्र शरोत्करैः ।। 63

हेममाली महामाली विद्युन्माली हलाकुली ।
वसुभिः पितृभिस्तत्र युयुधुस्ते रथस्थिताः ।। 64

मुसण्ठीचक्रनाराचैर्भल्लैःप्रासैः परश्वथैः ।
अन्योन्यमभिजघ्नुस्ते ततक्षुरुभयाञ्छरैः ।। 65

विश्वेदेवास्तथाऽऽदित्या हेमाङ्गेन सुमन्युना ।
युयुधुः शरधाराभिर्वर्षद्भिरितरेतरम् ।। 66

कोलाहलमभूद् युद्धं सन्नद्धगजवाजिनाम् ।। 67

रथानां च पदातीनां वर्षतां निघ्नतां शरैः ।
वायुः सुयोधनं चक्रे शतसाहस्रसायकैः ।। 68

यमः क्रूरमुखस्तत्र पर्जन्यसमनिःस्वनः ।
निर्ऋतिर्दारुणस्तत्र युयोध समरे मरैः ।। 69

यक्षाधिपः शोणिताक्षं योधयामास खड्गधृत् ।
यूपाक्षं वरुणस्तत्र युयोधाजौ पतत्रिभिः ।। 70

अग्निस्तदा पतङ्गेन युयुधे शरपाणिना ।
ईशानो मन्दिरेणैव युयुधे स्वगणैः सुरैः ।। 71

विष्णुः शूरेण युयुधे चक्री शाङ्र्गच्युतैः शरैः ।
सिह्मास्यं च चतुर्वक्त्रो योधयामास सायकैः ।। 72

अहं तारकमायान्तं स्वगणैः परिचारितम् ।
कालतोयदवृष्टयेव किरन्तं मद्रथं शरैः ।। 73

तमच्चिनं तं(अच्छिन्दि) तारं शरकोटिवर्षै-
हर्षेण युद्धोत्कटतर्षितोऽहम् ।
दग्धं रथाङ्गं च पृषत्कसङ्घै-
र्ववर्ष कालाम्बुदवर्षतुल्यम् ।। 74

सदश्वयुक्तं सुपताककूबरं
ससारथिं तारकमेव जन्ये ।
पर्जन्यवर्षप्रतिमैः सुपुङ्खै-
ववर्ष बाणैरहमात्तरोषः ।। 75

स तारकोऽप्येवमथोऽसहस्तदा
रथं मदीयं निचकर्त सारथिम् ।

त्रं ध्वजंमे कवचं शरोत्करैः
तमप्यहं मत्करवाललाघवैः ।। 76

स शूरकर्मापि हरिं रणाजिरे
चकर्त देहे च शरोरुधारया ।
गारुत्मते पक्षयुतेऽसिपक्षकैः
पलाशपुष्पाभसमांसमङ्गकम् ।। 77

चकार बाणैस्तिलशश्चकर्त
विवृत्तदंष्ट्रो भ्रुकुटीकृताक्षः ।
स चापि विष्णुः स्वकरोरुचक्र-
धाराभिविस्तारितदैत्यमुण्डः ।। 78

सिह्मोरुवक्त्रं च शरोत्तमैर्विधि-
श्चकर्त तस्यापि च दैत्यवर्यः ।
हंसस्य पक्षोरुयुगे सुपक्षै-
र्ललाटजाले मकुटेकरेषु ।। 79

गजा महामात्रयुताः पतन्ति
विनादयन्तोऽप्यसृगुक्षितास्तदा ।
अश्वाः स्खलन्त्येव पदे पदे हताः
गणा रथानां च सुसारथी(?)युताः ।। 80

तत्र त्रिशूलनिहता गणदैत्यवर्याः
कूजन्ति धावन्ति अधः पतन्ति ।

नदन्ति गर्जन्त्यसुराः सुरास्तदा
तिष्ठन्ति विष्टम्भितहस्तगात्राः ।। 81

यज्ञोपवीताकृति चिच्छिदुः सुरान्
दैत्यांश्च तत्रैव गणास्तदानीम् ।
शरोरुवर्षैः प्रसमीक्ष्य हर्षितान्
पानीयतर्षान् प्रविमुक्तमूर्धजान् ।। 82

सप्रासहस्ता ननृतुः कबन्धा
विच्छिन्नसन्धा असुराः सुरव्रजाः ।
योक्त्रोरुवक्त्रैश्च विवृत्तजिह्वै-
र्निमीलिताक्षैरसृगुक्षिताश्वैः ।। 83

शुण्डोरुदण्डैरथ दन्तखण्डै
भूर्भाति दैत्यासुर सङ्गरे स्तृता ।
दैत्या वारणाकुम्भेषु सुषुपुर्युद्धमूर्च्छिताः
रात्रावतिपरिश्रान्ताः कामिनीनां कुचेष्विव ।। 84

नदन्ति भेर्यः पटहोध्वशङ्ख-
मृदङ्गयुक्ताहतिगिक्कतालाः ।
नृत्यन्ति तत्रैव वराप्सरोपमाः
कबन्धवर्याः रणरङ्गसङ्गाः ।। 85

तत्र स्रुता चाप्यसृगायमान-
दूकूलमूलासुरमांसपङ्किला ।

सुकच्छपच्छत्र सुचामरोरु-
मीना सुमस्तिष्कवरोरुफेना ।। 86

रथेभवाहासुरभीरुदेह-
द्वीपासुराणां गणमुण्डपद्मा ।
असृग्वहा सा तटिनी बभौ तदा
गङ्गा यथा शङ्करजूटनिः सृता ।। 87

स तारको मच्छरघातपीडितः
पपात भूमौ विरथो हताश्वः ।
तदा मया पाशुपतास्त्रधर्षितो
ऽवर्षंश्च देवाः कुसुमोत्करं मयि ।। 88

स शूरमाजौ च हरिर्विजित्य
निहत्य दैत्यान् परिदध्मुरम्बुजान् ।
सुराः प्रहर्षातिशयादनृत्यन्
तदा मुदाऽऽसं स्तवनैर्वचोभिः ।। 89

विधिस्तदा सिह्ममुखं निहत्य
विहृत्य चाजौ शरजालवर्षणैः ।
रणावनौ मां परिषस्वजे मुदा
कुमारसेनापतिरद्य नस्त्वम् ।। 90

अवोचदित्थं स हरिः सशक्रः
कल्पद्रुपुष्पं ववृषुः सुराश्च ।

मुदा जयस्वे(?)ति वचस्तदोचुः
शान्तास्तदाऽऽसन् मुदिताश्चलोकाः ।। 91

**स्कन्द उवाच -**

न चित्रमेतच्च त्रिणेत्रपाद-
पाथोरुहद्वन्द्व सुभक्तिवैभवात् ।
जन्येषु धन्यो विजयोमयाप्तः
प्रमाण्यमन्यन्नहि रोचते मे ।। 92

।। इति श्रीशिवरहस्ये द्वादशाम्शे
तारकासुर संहारो नाम
द्वाविंशोऽध्यायः ।।



## ।। त्रयोविंशोऽध्यायः ।।

**सूत उवाच -**

सुराः शक्रादयस्तत्र ब्रह्मविष्ण्वादिभिः सह ।
ऋषिभिः साध्यगन्धर्वैरप्सरोभिर्गता मुदा ।। 1

तारके नाशमायाते सगणास्तत्र सङ्गताः ।
प्रहृष्टास्तुष्टुवुस्तत्र त्रिविष्टपनिवासिनः ।। 2

प्रणम्य स्कन्दमव्यग्राः शक्तिहस्तं तदा सुराः ।
कल्पद्रुकुसुमैर्देवाश्चन्दनैर्वरगन्धिभिः ।। 3

रत्नाभरणजालैश्च केयूरमकुटाङ्गदैः ।
सुवर्णमुक्ताजालैश्च विकिरन्ति सुरासुराः ।। 4

पट्टाम्बरैः समभ्यर्च्य मुदा देवाः सवासवाः ।
प्रणेमुः नामभिः स्कन्दं सम्पूज्य सुरसत्तमाः ।। 5

**देवाः ऊचुः -**

सुब्रह्मण्याय महते ब्रह्मणस्पतये नमः ।
उमासुताय दिव्याय अतिपर्णाय ते नमः ।। 6

कार्तिकेयाय वन्याय तारकान्तकराय ते ।
वल्लीसेनासमेताय सर्वदेवस्तुताय च ।। 7

कुमाराय हरायाथ वीरबाहुनताय च ।
अम्बिकातनयाद्यैव प्रसन्नास्याय ते नमः ।। 8

षडाननाय ते धाम्ने वेदसीम्ने नमोनमः ।
शिवप्रियाय शान्ताय गुहाय मथनाय च ।। 9

प्रणवार्थाय साराय जगतां पालकाय च ।
सेनान्ये ते नमस्तुभ्यं शक्तिहस्ताय रंहसे ।। 10

गोप्त्रे धात्रे विधात्रे च सर्गसृष्ट्यन्तहेतवे ।
हिरण्यकवचायाथ शरकार्मुकधारिणे ।। 11

महापाशुपतास्त्राग्निदग्धदैत्याय ते नमः ।
गङ्गागर्भाय महते कृत्तिकासूनवे नमः ।। 12

उमागर्भाय कान्ताय ताराय तरणाय च ।
कनकाङ्गदकेयूरमकुटालङ्कृताय च ।। 13

षोडशस्वरवक्त्राय पात्रायाक्षररूपिणे ।
विनायकानुजायाथ सुरसैन्याविने नमः ।। 14

कन्दर्पकोटिलावण्यदेहाय परमात्मने ।
यक्षीयक्षधरायाथ हेमवर्णाय ते नमः ।। 15

गन्धर्वगणगीताय शम्बराय स्तुताय च ।
विशालवक्षसे पात्रे सर्वदेवस्तुताय च ।। 16

अखण्डिताय नित्याय सत्याय प्रथिताय च ।
षष्ठीप्रियाय वात्याय रभसाय गणाय च ।। 17

नतप्रियाय मान्याय सर्वयज्ञसुता(मया)य च ।
ओजसे तेजसे चैव वरेण्याय तथा भृते ।। 18

गिरिवासाय मुष्टाय पुष्टाय बलशालिने ।
केकिवाहाय दान्ताय नमः कुक्कुटकेतवे ।। 19

शरकाण्डभवायाथ महतेऽणीयसे नमः ।
सनातनाय व्योमाय शिवज्ञानप्रदायिने ।। 20

शतपुष्करमालाय शक्रपालाय ते नमः ।
त्वयैव पालिता लोकास्त्वया सृष्टाश्चराचराः।। 21

तारकार्तिविनाश्यैव देवाश्चेमे सुपालिताः ।
त्वं यज्ञस्त्वं स्वधा स्वाहा त्वया वर्णाश्रमा भुवि ।। 22

पालिता मुनयो यज्ञैर्यजन्त्यद्य सुखेन हि ।
ग्रहा नित्यं प्रमोदन्ते ऋक्षैर्ऋषिगणैश्च खे ।। 23

शक्रस्त्रिविष्टपपतिरद्याभूत्त्वत्कृपावशात् ।
अग्निर्वहति हव्यानि कव्यानि पितृसन्मुखे ।। 24

लोका निरर्गलं सौख्यं भजन्ति तव विक्रमैः ।
त्रिविक्रमो वै वैकुण्ठं पाति सर्वचराचरम् ।। 25

ब्रह्मापि सत्यलोकस्थः सृष्टिं वितनुतेऽखिलाम् ।
समुद्राश्च तथा नद्यो नोद्वेलं प्रवहन्ति च ।। 26

वायुः सौम्येन वपुषा वाति नित्यं सुखेन हि ।
सोमः ऋक्षैर्भ्राजते खे तवाद्य विजयेन हि ।। 27

अर्कोऽयं भाति किरणैस्तव विक्रमतोषितः ।
यथापूर्वं स्थिता लोकास्त्वयात्र निहतेऽसुरे ।। 28

सगणे सुरता हृष्टा जातहर्षा भवात्मजम् ।
सेनापतिं तं देवानां भुजङ्गेनाथ तुष्टुवुः ।। 29

देवा ऊचुः -

मुखे वारणेन्द्रं नखेचार्धचन्द्रं
मुखे पूर्णचन्द्रं कृपासान्द्रनेत्रम् ।
कृतस्तुत्युपेन्द्रं पदाब्जाननेन्द्रं
भजामोऽस्ततन्द्रं कथङ्कारमेतम् ।। 30

नमामोऽभ्रगङ्गातरङ्गाङ्गसङ्गं
सशृङ्गारमोङ्कारपाथोजभृङ्गम् ।
शिवोत्सङ्गसङ्गं शिवस्यान्तरङ्गं
किरातीगणोल्लासिवल्लीभुजङ्गम् ।। 31

करे शक्तिमन्तं हरे भक्तिमन्तं
शरे जन्मवन्तं हरित्पावनं तं
उदारेऽवनंतं सदारं वसन्तं
सदोङ्कारमन्तर्भजामो गुहं तम् ।। 32

शरच्चन्द्रषट्कस्फुरद्वक्त्रबिम्बं
प्रबालप्रवालप्रभामण्डलस्थम् ।
रुचा धूतमित्रं कृपाशीतनेत्रं
भजामः सदा देवसेनाकलत्रम् ।। 33

विधे स्वागतं किं हरे मङ्गलं किं
सखेदानुषङ्गं कुतो दृश्यतेऽङ्गम् ।
क्व वैरी समानीयतां मे शताङ्गम् ।
क्रुधैवं वदन्तं भजामो गुहं तम् ।। 34

क्व शूरः क्व वा तारकः सिह्मवक्त्रः
क्व वेत्यट्टहासप्रभिन्नाण्डभित्ति ।
हठान्नीलकण्ठेन्द्रकम्ठाधिरूढं
भजामो मुदा रक्षितारं कुमारम् ।। 35

भवद्गर्भदासर्भकान् दीनबन्धो
ह्यव प्रेमयुक्तान् हिनः क्षिप्रमंहः । (?)
न चेत्तेऽपकीर्तिः अतः स्वामिनं स्वं
भजामो धुनीमो भवामोऽद्य भक्ताः ।। 36

द्विषड्बाहुदण्डं द्विषट्चारुगण्डं
द्विषट्कर्णषण्डं त्रिषण्णेत्रतुण्डम् ।
हतक्रौञ्चगोत्रं धृतब्रह्मसूत्रं
भवप्रीतिपात्रं भजामः सुगात्रम् ।। 37

प्रसीद प्रसीद प्रभो तारकारे
प्रसीद प्रसीद भवामो निरीहाः ।
प्रपन्ना विपन्नाः पुरा तार खिन्नाः
भवामोऽद्य भिन्नास्त्वया दुःखनुन्नाः ।। 38

किमर्थं सुरार्थं कृता नानुकम्पा
निलिम्पाः पुरा तारदुःखाभिकम्पाः ।
भवत्पादमोद प्रभावाब्धि सौधे
वसामो विशामः प्रमोदोरुसिन्धुम् ।। 39

उरोन्यस्तहारं शिरोन्यस्तहीरं
दयासिन्धुपूरं शिवज्ञानसारम् ।

पराभूततारं भवाम्भोधिपरं
सुरा जालसौरं भजामः कुमारम् ।। 40

गुरूणां गुरुं देवसेनासमेतं
परेषां परं केकियानेन यान्तम् ।
कटाक्षार्धपातं कुरुष्वाद्य भद्र
ओङ्कारमुद्रं भजामोऽस्तनिद्रम् ।। 41

शताङ्गं विहङ्गं कृतारातिभङ्गं
सुधीचित्ररङ्गं महापापभङ्गम् ।
कुजे प्रेमभाजं भुजे सर्पराजं
समाजाधिपं त्वां भजामो नताजम् ।। 42

नमस्ते नमस्ते शिवप्रेममूर्ते
नमस्ते नमस्ते त्रयीगीतकीर्ते ।
नमस्ते नमस्ते हृतत्रैदशार्ते
नमस्ते नमस्ते सुराभीष्टपूर्ते ।। 43

सुराणां पुरस्ताद्यदि त्वत्पदाब्जं
समस्तापदस्ता निरस्ता भवेयुः ।
करस्था विमुक्तिर्हृदिस्था सुभक्तिः
शिवस्थेशभक्तिर्भवेत्सत्यमेतत् ।। 44

क्वचिद्भूतसङ्गं क्वचित्प्रेतसङ्गं
क्वचिद् व्याधिसङ्गं क्वचिद् धातुसङ्गम् ।
क्वचित्क्षुद्र पुङ्खानुपुङ्खप्रसङ्गं
समुच्चाटयन्तं भजामो गुहं तम् ।। 45

भवानेव पाता भवानेव नेता
भवानेव दाता भवान् दुःखहर्ता ।
इति त्वत्कटाक्षं प्रतीक्ष्याऽऽवसाम
सहस्वापराधं कृपापारसिन्धो ।। 46

न मन्यामहे त्वत्पदाब्जात्सुधन्यं
नचान्यं भजामो न चान्यं नमामः ।
त्वया पालनीया वयं पालकस्त्वं
समस्तं सुराणां तवास्ते व हस्ते ।। 47

त्वमेवास्य कर्ता त्वमेवास्य धर्ता
त्वमेवास्य भर्ता त्वदन्यं न यामः ।
भवाम्भोधिमग्ना दयाम्भोनिधे नः
समुद्धर्तुमर्हस्यतोऽप्यर्हणीयः ।। 48

बलारे किरीटं गृहाणाच्युतेमं
गृहाणातपत्रं विधे हारजलम् ।
इति प्रौढवाचं वदन्तं निवेशं
जनन्या विशन्तं भजामोऽनुयामः ।। 49

भवत्पादतोऽन्यन्नहि प्रार्थयामः
भवे भक्तितोऽन्यत् क्वचिन्नार्थयामः ।
त्वया शिक्षणीया उतारक्षणीया
त्वयोपेक्षणीया न वा मोक्षणीया ।। 50

पिता त्वं गुरुस्त्वं च माता च नित्यं
क्षुधार्ता भवर्तिप्रपन्नाः स्म दीनाः ।

कटाक्षावलोकेऽप्युपेक्षा यदिस्या-
दगतिः का सुराणां विभो भूसुराणाम् ।। 51

भुजङ्गं पठन् यः कुमारस्य नित्यं-
स भुक्तः समुक्तः स वै मुक्तियुक्तः ।
सुपुत्रैः कलत्रैश्च मित्रैश्च युक्तो
लभेत श्रियं चारु भाग्यैर्वरैश्च ।। 52

वयं दीनदीना भवान् दानशूरः
महानेष कालस्त्वयं दिव्यदेशः ।
भवे भक्तिमेकां भवाम्भोधिनौकां
दिश त्वं दिश त्वं ज्वदन्यं न यामः ।। 53

भुजङ्गस्य भक्त्या शतावर्तनेन
प्रसन्नो भवाद्यतिदुःखेन खिन्नान् ।
नतान् म्लानवक्त्रान् कुरुष्वर्तिनुन्नान्
सुरान् पापभिन्नान् कुरुष्व त्वमेव ।। 54

**सूत उवाच -**

इत्थं सुरेन्द्रस्तुतिमाकल्य्य
ययौ रथेनाशु गणैः सुरौघैः ।
प्रणन्तुमीशानपदाम्बुजं मुदा
गुहस्तदा तारकनाशतोषितः ।। 55

गजाननेनाशु समागततस्तदा
षडाननोऽथ प्रययौ सुरायनम् ।
उमाननं वीक्ष्य मुदा रसायनं
जहर्ष हर्षेण स दैत्यनाशनः ।। 56

वसन्तं हृदन्तः शिवां लोकयन्तं
प्रपश्यन्ति देवा प्रशान्ताः कुमारम् ।
उमाकान्तमेकं नितान्तं भजन्तः
कृतान्तान्तकं वेदवेदान्तवेद्यम् ।। 57

हराजाच्युताग्नीन्दुवाय्वर्कशक्रा
विराजन्ति भासा समस्ता निरस्ताः ।
नमस्ते नमस्ते नमस्ते शिवेति
प्रभोरब्जपादे विशुद्धा नमन्ति ।। 58

तदा ते सुराः सम्प्रणम्यामरेशं
समाचख्युरेतस्य तारस्य युद्धम् ।
भवत्पाद भक्त्या कुमारेण शक्त्या
हतस्तारकोऽयं निरस्तं च दुःखम् ।। 59

वीक्ष्य त्रयक्षपदं महोक्षवरगं वीक्षास्मिताक्षं मुदा
भक्षीभूतगरं भगाक्षिहरणं दक्षादिदीक्षापहम् ।
वीक्षाशिक्षितमन्मथान्धकपरं स्कन्दो मुदा तं हरं
प्राणंसीदवतंसितेन्दुमनलालङ्कारफालाक्षकम् ।। 60

दक्षध्वाङ्क्षमखैकपक्षसुरता सन्धुक्षिताधोक्षजो
देवांस्तान् गणपान् मुनीश्वरवरानारादपश्यन्मुदा ।
विघ्नेशं नततारकारिमसकृत् पादे पतन्तं हरो
बाहुभ्यामथ गाढवत्तरहृदा तौ चालिलिङ्गे सुतौ ।।61

**ईश्वर उवाच -**

गिरिजे वरतारकासुरप्रतप्ता
सुरवर्याः किल पारिजातपुष्पैः ।

परिपूज्यं चिरं विरज्य भोगै-
विरजास्ते(?) प्रबभुर्मुदा शिवं माम् ।। 62

हरि शक्राब्जभवाः सुरास्तदानीं
मुमुदुस्ते हरभक्तिशक्ति युक्ताः ।
भवभक्ता मुनयोऽपि हृष्टतुष्टा
अमितानन्द सुतुन्दिलान्तरङ्गाः ।। 63

**सुरा ऊचुः -**

तव शिव दयया च लोक भाग्यै
र्मथितास्ते सुरशत्रवस्तनुत्रैः ।
हरशक्तिधरेण बाणवर्षैः
प्रमथेन्द्रैरुरगेन्द्रमन्युभिः खे ।। 64

**सूत उवाच -**

सस्मार स्मरहं च नन्दनवरो वीरः कुमारोऽमरा-
ऽऽरामोद्भूतसुनन्दनोत्तमसुमैरभ्यर्चयच्छङ्करम् ।
नाम्नामष्टसहस्रतोऽष्टतनुवं रुद्रार्थपद्यैः स्तुवन्
देवीं वेदपदस्तवेन अयजत् हृष्टो मुदा तं शिवम् ।। 65

।। इति श्रीशिवरहस्ये द्वादशाम्शे (भुजङ्गकथनं)
शिवसमागमो नाम
त्रयोविंशोऽध्यायः ।।



## ।। चतुर्विंशोऽध्यायः ।।

**स्कन्द उवाच -**

ओंकारकण्ठनिलयः ओंकारार्थप्रकाशकृत् ।
ओङ्कारबीजसुप्रीतः ओङ्कारस्वरमात्रकः ।। 1

ओङ्कारार्थः ओमितीड्यो नानामन्त्रस्वरूपवान् ।
नादरूपो नाशिताघो नामरूपगुणातिगः ।। 3

नागाजिनोत्तरासङ्गो नामप्रीतो नताखिलः ।
मायातीतो माधवोयो मार्गमाणो महेश्वरः ।। 4

मांसादनो मातृमेयमानादिगुणवर्जितः ।
शिवः शिवतरोऽशीतः शीतांशुकृतभूषणः ।। 5

शिवेतरहरः शम्भुः शिशिरर्तुप्रवर्तकः ।
वामदेवो वशी शान्तो वाद्यमोदोऽवसानकृत् ।। 6

वामश्चक्रप्रदो वाग्मी वाय्वाहारोऽगदो वसुः ।
यामीनीशकलामौलिर्यातायानप्रियोयमी ।। 7

यमप्रभथनो यष्टा यजमानो यतीश्वरः ।
सिन्धुनिषङ्गः सिह्मेन्द्रः सिनीवालीस्तुतिप्रियः ।। 8

सिन्धुसिह्मासनासीनः सिन्धुराङ्गत्वगम्बरः ।
धनाधीशोऽन्धसां नाथ धर्माधर्मविचारकः ।। 9

धौम्यो धाता धराधीशो धूर्जटिर्धर्मकेतनः ।
नमिताषेषदिक्पालो नरनारायणार्चितः ।। 10

नतिप्रीतो नमस्कार्य नगधृङ् नगवासभूः ।
मयस्करो मन्त्ररूप मस्करी मस्तकाम्बुधृक् ।। 11

मन्मथान्तकरो मन्युः मनस्वी मननातिगः ।
कपालपाणिः कालात्मा किष्कुः कीर्तिप्रदायकः ।। 12

कुसुमार्चनसुप्रीतः कुशलः केकयेश्वरः ।
कैलासमौलिनिलयः कोपात्मा कौलमार्गवित् ।। 13

कटाक्षपूज्यः कस्तूरीगन्धः वासैकमेदुरः ।
खण्डपर्शुः खाण्डवासः खिल्यः खीरप्रियः खु(ख)सः ।।14

खण्डपः खेटधृक् खैरः खान्तकृत् स्वर्धुनीश्वरः ।
खण्डितारातिनिलयः खर्जूरवनमध्यगः ।। 15

गयासुरहरो गार्ग्यो गिरीशो गीतिवर्धनः ।
गुरुर्गुर्जरगो गेयो गौरीभर्ताथ गैरिकः ।। 16

गोवर्धनो गन्धवहो गन्ता गर्वप्रणाशकृत् ।
घण्टाध्वनिप्रियो घस्थो घनगर्भो घनाघनः ।। 17

चन्द्रचूडश्चरुरूपश्चित्रकर्मा चितिप्रियः ।
चीनाजिनी चञ्चुचूडश्चैत्री चैत्ररथाश्रितः ।। 18

चेतोऽच्युतोऽथ चण्डांशुः चमसोद्भेदवासकृत् ।
छत्रधृक् छान्दसश्छागवाहनः छद्मरूपधृक् ।। 19

छेत्ता छेदकरोऽच्छोदः छन्दोगश्छान्दसप्रियः ।
जयदो जागतो जिग्युर्जयदो जीवितप्रदः ।। 20

जयकृत् जैत्रसञ्जेता जिष्णुर्जपपरायणः ।
जकुटाद्रिकृतावासो जटिलो जम्बुकेश्वरः ।। 21

जननो जूतिगो जूटी जङ्गमाजङ्गमात्मकः ।
झञ्झावाद्यरतो झङ्कारवप्रीतोऽथ झर्झरी ।। 22

झङ्कारकृत् झाङ्करिको झषकेतननाशनः ।
यमो यामप्रियो यन्ता यजमानो यमी यजुः ।। 23

यशस्करो यत्नपरो यष्टा यज्ञेश्वरो यतिः ।
टङ्काप्रियष्टङ्कधरष्टक्कारष्टारवाहनः ।। 24

नीलकण्ठः कालकालः कमेरः कश्मलापहा ।
वैकुण्ठपूजापीठस्थः द्विठान्तमनुमध्यगः ।। 25

डाम्भिको डमरुप्रीतो डामरीतन्त्रपूरकः ।
दडिमीफलसुप्रीतः डम्भो डम्भप्रियो जडः ।। 26

ढक्कारवप्रियो ढक्काधरो ढक्कारिकाप्रियः ।
ढुण्ढो गूढो महा बाढो गूढपाद् वरभूषणः ।। 27

णकारवाच्यो गणपः फणाधरवरप्रियः ।
वीणापाणिः शूलपाणिः कणपाद् कणभक्षणः ।। 28

तस्करस्तीर्थकृत् तीर्थ्यस्तुर्यस्तूर्यरवप्रियः ।
तेजस्वी तेजसां नाथस्तोषणस्तौल्यलालितः ।। 29

तन्तुस्तमालनीलाङ्गस्तारकस्ताम्रतारणः ।
(थ)धकारो मन्मथारातिः प्रमथेश कुथावृतः ।। 30

कम्पाकोऽथ कथाप्रीतः कौथुमो गीतसुप्रियः ।
दमनो दान्तनिलयो दिनेशो दानवानलः ।। 31

दुर्दान्तो दूतहरणो देशकालोऽथ दैववित् ।
दोषघ्नो दुर्गतिघ्नोऽथ दण्डपाणिर्दयापरः ।। 32

धनदो धान्यदो धारो धुन्धुकौको धुरन्धरः ।
धेनुप्रियो धैर्यधनो धर्माधर्मविशारदः ।। 33

नम्योऽनादिर्नीतिरतो नृत्तज्ञो नेत्रपालकः ।
नतार्तिशमनो नेताऽनन्तो नामविवर्जितः ।। 34

पद्मनेत्रप्रपूज्याङ्घ्रिः पार्वतीशः प्रसादकृत् ।
पीयूषकः पीतवासाः पीनाङ्गः पालकः पविः ।। 35

पोषणः पैतृकः पोषः पन्नगाभरणः परः ।
फणीश्वरधरः फालनयनः फल्गुकेश्वरः ।। 36

फूत्कारकृद्धुतशिराः फणितः फणिताकृतिः ।
बर्बरो बाहुमान् बिन्दुर्बिल्मिनिर्बुधवर्धनः ।। 37

जम्बूप्रीतोऽम्बरगतो बैन्दवासनसंस्थितः ।
बोधदो बौद्धहृद्बन्धो बलप्रमथनो बली ।। 38

भयहृद्भानुदृक् भिल्लो भीतिदो भूतिभूषणः ।
भेरीवाद्यप्रियो देवो भैरवो भोगभाग् भवः ।। 39

भोज्यपूज्यो भण्डखण्ड भीमो भागविवर्जितः ।
मनोन्मनो माणवको मितिकृन्मीनलोचनः ।। 40

मुनिप्रियो मूकपालो मेनकाजनको मनुः ।
मैनाकवरदो मोचाफलप्रीतो मरुत्वकः ।। 41

मौनिपूज्यो मन्थरको मस्करी मयशिल्पदः ।
यशोधनो यायजूको यज्ञकृत् यज्ञनाशनः ।। 42

यात्रिको यन्त्रमध्यस्थो यशोदातनयार्चितः ।
रमणो रावणप्रीतो रतिदो रुग्विनाशकृत् ।। 43

रेतस्वी रैभ्यवरदो रोदनोऽरातिनाशनः ।
रन्धनो रसपो रामो रतिदो रगणस्थितः ।। 44

ललाटनयनो लीनो लिङ्गस्थोलिङ्गमस्तक ।
लुलायवाहहरणो ललुर्लयविवर्जितः ।। 45

वसुदो वामदेवश्च विश्वनाथो विशालकृत् ।
वीतिहोत्रमहानेत्रो वेनो वैश्वानरो वटुः ।। 46

वौषट्कृत् वामदेव्योऽथ वामभागाङ्गनो वशी ।
षडध्वगः षडाधारः पाषण्डप्राणखण्डकः ।। 47

उच्चैर्घोषो घोरवेषो भीषणो बहुभाषणः ।
शाङ्गः शान्तः शिवः शीतः शुनकः शून्यकृत् छटः ।। 48

शेषो विशेषणः शास्ता शतात्मा शौनकार्चितः ।
सनातनश्च सावित्रः सिन्धुजूटः सुनीथकः ।। 49

सूतः सेतुः सौतिकरः सैकतः सन्नतिः समः ।
क्षपापतिकलाधारी क्षात्रकर्मा क्षितीरभः ।। 50

क्षुद्रकर्मविनाशात्मा क्षुत्तृष्णादिविवर्जितः ।
हाहाहूहूहमुखस्तुत्यो हानि(ह्रास)वृद्धिविवर्जितः ।। 51

हस्तिकृत्तिप्रियो हर्ता हरिकेशो हरो हनुः ।
हैयङ्गवीनहृदयो हरिदश्वान्तरस्थितः ।। 52

हंसकाख्यमहानागो हंसकूटाद्रिवासकृत् ।
भुजङ्गभोगभूषाढ्यो भूतिभूषितविग्रहः ।। 53

न्यङ्कुहस्तः शम्बरारिनिहन्ताऽथ महेश्वरः ।
अर्णवान्तःस्थितोयोगी भोगी रागविवर्जितः ।। 54

कपालधृक् कालकालः कालातीतोऽक्षरः परः ।
पर्णशय्यो महावैद्य आद्योऽभेद्यो विशारदः ।। 55

हिरण्यदशनोऽहार्यो मुञ्जिकेशो हरिद्युतिः ।
हव्यवाहाम्बको नित्यः स्तुत्यो वप्त्याप्रवर्तकः ।। 56

गयास्तुतो गुणी गोप्ता निर्गुणस्त्रिगुणातिगः ।
विष्णुप्रीतिकरः शोणः शोणाक्षः शोणतीरगः ।। 57

शतावर्तः शाश्वतात्मा शमनान्तकरः शठः ।
उगणो भगणोऽधीशः प्रभुः सम्मुख ईश्वरः ।। 58

सद्योजातो वामदेव ईशानोऽघोरपूरुषः ।
पञ्चब्रह्ममयः पञ्चमुखः पञ्चार्णमध्यगः ।। 59

पञ्चाक्षरीमध्यगतः पञ्चकोशविवर्जितः ।
पादपः पवनः पाशः पशुपाशविवर्जितः ।। 60

पथ्यः पद्मजपूज्याङ्घ्रिः प्रघसः पङ्कजेक्षणः ।
विश्वो विश्वाधिको नेता विश्वाक्षो विश्वतोमुखः ।। 61

विष्णुपूज्यो विशां श्रेष्ठो विनायकवरप्रदः ।
गङ्गाधरोऽम्बिकाभर्ता धर्ता हर्ता जनेश्वरः ।। 62

मेघवाहः प्रसन्नात्मा कङ्कालकवरो मधुः ।
वीतिहोत्रमहानेत्रः सत्रपात्रो दिगम्बरः ।। 63

महास्मशाननिलय ईशानोऽथ गराशनः ।
महाग्रासो महाभीमो विद्युत्यः शुक्ल ईश्वरः ।। 64

कन्दर्पदर्पहा कान्तः कपर्दी नीललोहितः ।
पिनाकपाणिः कालात्मा गोपतिर्वृषवाहनः ।। 65

सुरमन्दारमालाढ्यः कन्धरोऽनन्तविक्रमः ।
क्षयद्वीरो मारहारो हरः शीतांशुशेखरः ।। 66

शताङ्गवरदो होता यजमानो यशस्करः ।
मयस्करः शङ्करश्च शिपिविष्टः प्रतिष्ठितः ।। 67

प्रजापतिः पशुपतिः यतीनां पतिरग्निभूः ।
सामगानप्रियः शुद्धः प्रशान्तात्मा स्थिरः प्रभुः ।। 68

विभुर्विभासकोऽनन्तो रुद्र उग्रो महेश्वरः ।
जागर्तको जाङ्गलेशो जङ्गमाऽजङ्गमात्मकः ।। 69

जातुकर्णप्रियो ज्येष्ठः कनिष्ठः श्रेष्ठ उत्तमः ।
प्रतिष्ठा परमं धाम परमात्मा ऋतं महत् ।

यन्त्रात्मा मन्त्ररूपात्मा मन्त्ररूपः सदाशिवः ।
निगमागमसंसेव्यः सुराद्यः प्रतितामहः ।। 71

सुरासुरगणाध्यक्षः त्र्यक्षो दक्षमखान्तकः ।
महोक्षवाह उक्षेड्य भगाक्षिहरणोऽक्षतः ।। 72

अनल्पकल्पः शिल्पादिः सुशीलः कौलपूजितः ।
स्तव्यो नव्यो भव्यरूपो हव्यकव्यभुगव्ययः ।। 73

महाबलो महोत्साहो महादेवो महाङ्गधृक् ।
शतावर्तः शान्तमनाः सहमानः स्तुतिप्रियः ।। 74

सनातनो वामदेवो मनस्वी मानवर्जितः ।
गतिदो नतपो वाग्मी उच्चैर्घोषो महाहनुः ।। 75

त्रिपुण्ड्रफालो भस्माङ्गः पुण्डरीकत्वगम्बरः ।
गायत्रीमध्यनिलयो मित्ररूपो जगत्प्रभुः ।। 76

प्रसेनजित्कक्षवासो नरसिह्मनिपातनः ।
कोलदंष्टाधरो भूतो भूतनाथो रतिप्लुतः ।। 77

कूर्माम्रेडितपादाब्जश्चन्द्रचूडः स्थिरो मृडः ।
गूढपाद्वरहाराढ्य आढ्यो मौढ्यविनाशकः ।। 78

दण्डी कुण्डी तण्डुपूज्यो मुण्डी पाषण्डवर्जितः ।
अलिङ्गो लिङ्गनिलयः स्फुलिङ्गसदृषेक्षणः ।। 79

बिल्वपूज्यो बिल्मिनिश्च बिलेशयफणाधरः ।
बाणालिङ्गार्चनप्रीतो वडवानलसम्भवः ।। 80

बलारातिभुजस्तम्भो भूपतिर्विप्रपूजितः ।
अन्धकान्तकरो भर्गो गोवृषाङ्क उमाधवः ।। 81

धनञ्जयाक्षः कञ्चाक्षपूज्यपादाम्बुजद्वयः ।
वीतरागः सान्द्रसुखो वङ्कशङ्कुशरो हरः ।। 82

हयग्रीवार्चितो हेतिधरो *भिक्षाटनप्रियः ।
त्रिमधुस्त्रिसुपर्णात्मा पर्णशायी महेश्वरः ।। 83

अञ्जनाक्षः खञ्जनात्मा रञ्जनो रङ्गनृत्यकृत् ।
वायुरायुःप्रदो मध्यो गह्वरेष्टोऽन्तकान्तकः ।। 84

शर्वः सर्वगतः स्थाणुः स्थविष्ठः सुप्रसन्नवाक् ।
शब्दः स्पर्शो रसो रूपं गन्धश्चन्द्रो विभावसुः ।। 85

सर्वेन्द्रियगुणातीतः सर्वेन्द्रियविवर्जितः ।
सर्वेषां प्रभुरीशानः सर्वेषां शरणं सुहृत् ।। 86

सीमा भूमा महानात्मा प्रतिष्ठा पुरुषः परः ।
पुच्छं ब्रह्म ऋतं सत्यं हरो वैष्णवपिङ्गलः ।। 87

ऊर्ध्वरेता विरूपाक्षः क्षितीशः क्षान्तिवर्धनः ।
सविशेषो निर्विशेषः शेषाहिकटकोज्ज्वलः ।। 88

---

* मांसादनप्रियः इति मातृकायां पाठः । भगवतः सर्वात्मकतया सर्वविशेषण विशिष्टत्वमस्त्येव । निषाद व्याध भक्तैरपि पूज्य मानत्वात् तदुपहृतमांसभक्ष्यादनत्वं तद्दृष्ट्या युज्यत एव । अत्र युक्ता - युक्त्व - निर्णयः पाठकविद्वदधीनः ।

रस आनन्द आतार्यः शष्पः फेन्यः सिकत्यकः ।
प्रवाह्यो गेह्यवाह्यश्च प्रसाद्यः प्रमथाधिपः ।। 89

ज्ञानदो धनदो धीरो दुन्दुभ्यो भीतिनाशकृत् ।
मयस्करो मस्करी च तस्करो भास्करेक्षणः ।। 90

यशस्करः कुलुञ्चेशो भिषजामधिपो युवा ।
वर्णी वन्यो गृहस्थश्च सन्यासी न्यासमध्यगः ।। 91

भीमः सोमः प्रशान्तात्मा धाम धूमसवर्णभृत् ।
कामदः काममथनः क्रथनः कनकाम्बरः ।। 92

समो निः सीममहिमा वनेशः क्षेत्रनायकः ।
कैलासशैलनिलयो विलयो लयवर्जितः ।। 93

रक्षाकरो राक्षसघ्नो लास्यप्रीतो रतिप्रदः ।
प्रदोषताण्डवपरः सर्वदोषहरो हरिः ।। 94

आखण्डलमुखस्तुत्यो मेरुकोदण्डधृग्वरः ।
वेदघोटः पातिताशोह्यहिज्यो ब्रह्मसारथिः ।। 95

सूर्यचन्द्रमहाचक्रो हरिबाणोऽम्बरावृतः ।
क्ष्मारथस्त्रिपुराराातिः कण्वपूज्यो विचारकः ।। 96

शूली हली लाङ्गली च मुसली कुशली बली ।
गदी शङ्खी वशी चक्री कवची चान्धसां पतिः ।। 97

निषङ्गसागरः शम्भुः शान्तः सङ्गविवर्जितः ।
धीरोदात्त उदात्तश्च स्वरितः प्रचयस्वरः ।। 98

प्रणवः प्राणदः शोणः कणादः फणिकङ्कणः ।
मौनी मानी जितारातिः रीति धातुमयो महान् ।। 99

अणोरणीयान् सुभगो महतोऽपि महत्तरः ।
स्वराट् सम्राट् विराड् धाता विधातो सर्वतोमुखः ।।100

मेधाधिपो गाधिपूज्योह्याधिव्याधिविनाशनः ।
गाधाधिपो व्याधिनीशः कलधौतप्रभोऽबलः ।। 101

वेदगर्भो नीलकण्ठः कुण्ठिताघः कृपाकरः ।
जगदम्बापतिः साम्बस्त्र्यम्बको रविबिम्बगः ।। 102

सुधासागरमध्यस्थो मणिद्वीपनिकेतनः ।
कदम्बवनमध्यस्थः नीपवापीप्रपान्तरः ।। 103

पापतापहरो गोप्ता शम्बरारिनिषूदनः ।
त्रियम्बको वरनटो जटाजूटविभूषितः ।। 104

काट्यो नीप्यश्च सूद्यश्च सरस्यो मेध्य वैद्युतः ।
ईध्र्य आतप्य आतार्य आलाद्यश्चन्द्रशेखरः ।। 105

रेष्म्यो रस्यश्च वैशन्तोऽनाद्यः कूप्यो वटोद्भवः ।
आहनन्यश्च दुन्दुभ्यः सिकत्यः फेन्यवन्यकः ।। 106

प्रवाह्यश्च *सिकत्यश्च प्रवाह्यो गेह्य एव च ।
हिरण्यतल्प आताम्रो भवो रुद्रः पितामहः ।। 107

---

* नामसाहस्रेऽस्मिन् पौनरुक्त्यं दृश्यते ।

संसारवैद्यो विश्वात्मा गजश्चक्रप्रवर्तकः ।
मेरुः पिता स्विषुः पाता गरिष्ठो गह्वरस्तरुः ।। 108

हिरण्यबाहुराशास्यः सेनानीर्गिरिशो मृडः ।
सुधन्वा बिल्वपत्राच्र्यो गोनर्दोऽथ वृषाकपिः ।। 109

उरुगायः कल्पवृक्षो ज्योतिर्हेतिर्विभावसुः ।
सुतिथिः कौशिको धूर्तो धुत्तूरकुसुमप्रियः ।। 110

उमाधवो माधवाच्र्यो भस्मरुद्राक्षभूषितः ।
गङ्गातुङ्गजटामौलिर्नर्मदाशर्मदायकः ।। 111

तमालमालासुगलः करवाललसत्करः ।
अट्टाट्टहासो विकटो दंष्ट्राकुटिलवक्त्रकः ।। 112

रक्तवृत्तेक्षणः सुभ्रूः श्वभ्रो हर्ता कवीश्वरः ।
फुल्लनीलोत्पलस्रग्वी शम्याकाच्र्यो विरोधहा ।। 113

आर्यः सूर्यप्रभः शास्ता सुहस्तो बस्तचर्मधृक् ।
क्षेत्रेशो जन्महा चात्मा अमोघश्चाद्रिजापतिः ।। 114

शाणचीरधरोऽघोर बर्बरो भैरवः सखा ।
उष्णीषवसनच्छन्न उपानत्पात्प्लवः शिवः ।। 115

वृक्षपल्लवसन्मौलिः शुनांपतिरपां पतिः ।
जघन्यो बुघ्नियश्छन्दोऽप्यरुणो भगणेन्द्रधृक् ।। 116

कुमारजनको वेत्ता परिवीतोपवीतधृक् ।
बभ्रुः सुचेता मीढ्वांश्च आषढो द्रापिरुत्तमः (?) ।। 117

एकाक्षो नैकपात् सुभ्रूः अधिपो मित्रपः शिवः ।
क्षेत्रपः स्वपतिर्देवो धनपः शत्रुनाशकृत् ।। 118

अन्नेषुश्चैव वातेषुस्तीर्थेषुप्रपथां पतिः ।
आयुर्दो धनदो धीरो रसः शिवतरो भृगुः ।। 119

एवं नामसहस्रेण तुष्टावाष्टाकृतिं हरम् ।
स्कन्दनन्दितमन्दारवृन्दारकगणानतः ।। 120

शृण्वन् पठन् शिवं चार्चन् बिल्वैः पर्वणि सर्वथा ।
ज्योक् स जीवति वंशेन सर्वसम्पदमश्नुते ।। 121

आम्नायसर्वार्थसहस्रनाम्नां
भूम्नां च सीमान्तमहिम्ननाम्नाम् ।
लेशेऽप्यशेषांशविशेषशब्दवित्
किं वास्य शेषः स मुखेन वक्ति ।। 122

नाम्नां सहस्रं प्रजपन्नघघ्नं
ब्रध्नः प्रभो जायत एव सत्यम् ।
अहो न कोऽपीह नहीनपुण्य-
महीनवंश्यो लभतेऽस्य किं गुणम् ।। 123

।। इति श्रीशिवरहस्ये द्वादशाम्शे
स्कन्दकृत शिवसहस्रनाम स्तुतिर्नाम
चतुर्विंशोऽध्यायः ।।



## ।। पञ्चविंशोऽध्यायः ।।

चिदम्बरेश्वरशिवमुखाम्बुजरवित्विषे ।
यस्यै जैमिनिरुद्युक्तस्तस्यै वाचे नमोनमः ।। 1

प्रत्यूहशान्त्यै हेरम्बं प्रत्यूहयति ईश्वरः ।
विस्मापयन् स पितरौ अस्माकमस्तु केवलः ।। 2

वन्दे श्रीशिवपादाब्जमद्वन्द्वानन्दसाधनम् ।
चेतसां सम्प्रदायानां एतदालम्बनं परम् ।। 3

पुस्तमुक्तालसद्बाहुरस्तु मे भारती मुखे ।
नियोजयन्ती सा देवी धियो विश्वा विराजती ।। 4

हृद्यैरष्टोत्तरशतपद्यैरेवं शिवैस्तथा ।
प्रह्वा वेदस्तुतौ भूयाज्जिह्वा मे मधुमत्तमा ।। 5

काव्यालङ्कारसर्वस्वमाधुरीलहरीमुचा ।
वाचा परमकल्याणी(णि) मुखं हि मम शोभया(य) ।। 6

मादृशां वैखरीवाचां त्वादृशीं स्तोतुमम्बिके ।
यतो बिभेति ललिता ततो नो अभयं कृधि ।। 7

मदीयकर्मसु शिवे त्वदीयदयया मुहुः ।
अवधूतरूषः सन्तु अवधूता अरावयः ।। 8

रवीन्दुदक्षवामोद्यत्ताटङ्कां रुचिरामति ।
महाविद्येश्वरीं वन्दे ग्रहनक्षत्रमालिनीम् ।। 9

---

* यदेवालम्बनं परम् ।

खण्डशर्करयेवाम्ब दययालोकयाशु माम् ।
चण्डिके तेन जीवामो मण्डूका उदकादिव ।। 10

गङ्गाद्या अभिषेकार्थं तुङ्गान्ताः सन्निधत्त भोः ।
पापोपशान्त्यै मेमातरापोहिष्ठा मयो भुवः ।। 11

हृदयस्थेयसी नित्यं सदये मम कालिके ।
भूयाद्वितर मे श्रेयः आयुषा सहवर्चसा ।। 12

काल्ये त्वद्भक्तिविमुखाः कालि सन्ति यतोऽधमाः ।
अप्रमत्ताःस्म तं देशं मा प्रगाम पथो वयम् ।। 13

असमञ्जससंसारादसमञ्जसमेव माम् ।
वत्सला भवती त्रातुं वत्सं गौरिव धावतु ।। 14

अर्थिभ्योऽभीतिवरदे मुदे भद्रं ददासि यत् ।
लक्ष्मीस्तं भजतां पद्भ्यां लक्ष्मीमनपगामिनीम् (?)।। 15

योऽस्मान् द्वेष्टि वयं यं च द्विष्मो दुष्यति यश्च नः ।
दुर्गे शूलेन तानेतान् मम शत्रून् विनाशय ।। 16

धीरैकसुलभां देवीं घोरसंसारमोचनीम् ।
अहोरात्रं च नः पायादघोरा पापकाशिनी ।। 17

ब्रह्मानन्दसमुल्लासे लीलान्दोलितलोचनाम् ।
महासौभाग्यजननीं महालक्ष्मीमुपास्महे ।। 18

उग्रपत्नि समग्रान्मे दुर्ग्रहानाग्रहादिकान् ।
अनुग्रहादिमान् शिक्ष सर्वग्रहनिवारिणी ।। 19

आर्तिं निवार्य भद्राणि पूर्तिं स्फूर्तिं च पार्वति ।
मूर्तिं प्रदर्श्य रुचिरां कीर्तिमृद्धिं ददातु मे ।। 20

अधिकारिसमिद्धं मां सन्ध्यानटनसाक्षिणी ।
वर्चस्वन्तं धराध्यक्षं आयुष्मन्तं करोतु माम् ।। 21

गर्भातिदयिते दुर्गे निसर्गस्त्वं जगत्त्वयि ।
आयुस्तत्कृपया नित्यं मयि श्रीः श्रयतां यशः ।। 22

वेदान् शास्त्राणि यज्ञांश्च मोदाद्भक्तिमपि त्वयि ।
प्रियं कीर्तिं धृतिं दाक्ष्यं श्रियं वासय मे कुले ।। 23

माता कथं विरुद्धांस्त्वं सहसे सर्वमङ्गले ।
सर्वाण्यलक्ष्मीमापत्तिं सर्वां निर्णुद मे गृहात् ।। 24

राजराजेश्वरी माता धत्से त्वं धनमव्ययम् ।
दयां कुरु सुतेऽहं त्वां तामिहोपह्वये श्रियम् ।। 25

मदीयहृदयाब्जस्थत्वदीयमहसा शिवे ।
जहि मे क्रोधलोभादीन् लक्ष्मीमावासयान्वहम् ।। 26

पवित्रमन्त्रैः सुश्लोकै विचित्ररचनैः शिवाम् ।
वाचस्पतिरिव स्तुत्वा वाचस्पत्यमशीमहि ।। 27

पुत्रदे पौत्रदे मातर्नष्टदे गजवाजिदे ।
ज्ञानदायै नमस्तुभ्यं घनदायै महाधने ।। 28

तेजसे यशसे मातरोजसे महसे शिवे ।
चर्चिते गन्धपुष्पाद्यैरचेतास्त्वां हवामहे ।। 29

सञ्चितागामिदुःखेभ्यः स्मरतस्त्वामपालयः ।
प्रारब्धाच्च महादेवि पुनर्नः पाहि विश्वतः ।। 30

पौण्डरीकान्तयज्ञेभ्यश्चण्डिके प्रीतये तव ।
शतानि दशरिक्थानां आसहस्राणि दद्महे ।। 31

जपात्पवित्रकैर्मन्त्रैः शिवायै पायसं धृतम् ।
बिल्वपत्रसरोजानां सहस्राणि च दद्महे ।। 32

पण्डितास्तैरलं धीराः पौण्डरीकान्तकर्मभिः ।
उपासितुं महाविद्यां असखाय आनिषीदथ ।। 33

विपक्षापक्षयक्षारिपक्षग्रहमहर्क्षजम् ।
भयशंसीक्ष कामाक्षि रक्षस्व मां पदे पदे ।। 34

प्रचण्डचण्डमुण्डादिखण्डनोद्दण्डवज्रके ।
ये मेधनापहर्तास्तांस्ते ददामि जम्भयोः ।। 35

प्रारब्धमनिवार्यं चेदीदृशे वरदाभये ।
किमर्थं तव देव्यै ते ततो मे श्रियमावह ।। 36

ब्रह्मचक्रलसद्भूपा ब्रह्मविद्याविदेवताः ।
ईडनीयास्त्रयीचूडैः षोडशी शर्म यच्छतु ।। 37

महादारिद्र्य(द्र्य)शमनीं याभूत्पापविमोचनाम् ।
शिवां नुमस्तां कालाग्नौ शिवारुद्रस्य भेषजी ।। 38

अन्नपूर्णे दयापूर्णे त्वन्नाम परिकुर्वते ।(तः)
सन्निधत्स्व ममोदारे अन्नपाने च सर्वदा ।। 39

यदि देवि कटाक्षः स्याद् हृदि शक्रादयः सुराः ।
मुहुर्हविर्भिः सोमाद्यैरहं वो जीवनप्रदः ।। 40

यत्सान्निध्यं देवि सिद्धं असाध्यं साधयाशु मे ।
ईदृशेन महिम्ना त्वां प्रशंसन्ति प्रशस्तिभिः ।। 41

नानन्दयन्ति किं देवि सकृद्वा त्वां गिरो मम ।
भक्तिरक्ती न चेद्वेत्सि भुक्तिमुक्ती न दित्ससि ।। 42

अधमर्णत्वमेतत्ते त्वं हि वेत्थ यथातथम् ।
आक्षेपं नः समाधेहि तिष्ठन्ती पुरतो मम ।। 43

निश्चित्य व्यतिरेकं ते भूरि नाम मनामहे ।
तुभ्यं देवि यशस्कामा भक्तस्यैतन्निदर्शनम् ।। 44

जिष्णोरपि सखायोऽद्य विष्णोः कर्माणि पश्यत ।
कर्मणाभ्यर्णपूर्णा त्वं कर्णिकाकर्णिसन्मुखी ।। 45

अपर्णां वर्णये तूर्णं सुवर्णां हेममालिनीम् ।
तुङ्गस्तनीं शर्वसर्वमङ्गलामीश्वरप्रियाम् ।। 46

मङ्गलायतनां(नं)लौमि पिङ्गलां पद्ममालिनीम् ।
नन्दनोत्त्थ सुपुष्पाणि चन्दनान्यर्चितुं शिवाम् ।। 47

स्वयं सम्पाद्य पुरतः श्रियं देवीमुपह्वये ।
दयार्द्रहृदये मातः क्रियाशालिनमप्युमे ।। 48

त्वं मां भजस्व पद्माक्षि येन सौख्यं लभाम्यहम् ।
रक्ष मामम्ब ललिते यक्षराजसमर्चिते ।। 49

पूजार्चेह विराजेते प्रजया च धनेन च ।
परितः कान्ति धी श्रीभिर्गरिमाणं ययुः शिवे ।। 50

उमे तव दया दृष्ट्या सोम इन्द्र बृहस्पती ।
त्वच्चारु चरणं स्मृत्वा सच्चिदानन्दरूपिणि ।। 51

अच्युतो वाग्भवप्राप्तौ अच्युतां बहुलां प्रियाम् ।
हनुमद्वर रामाद्यैर्मनुभृद्भिर्महात्मभिः ।। 52

अर्थितासि महादेवि दीर्घायुत्वाय वर्चसे ।
गुणाढ्यपाकसरसशय्यालङ्काररीतिभिः ।। 53

शोभतां सुसुखं वाणी शोभयन्ती मुखं मम ।
दुष्टचित्तं नष्टवित्तं कष्टवृत्तमिमं जनम् ।। 54

पातुं जननि ते चित्तं यथा वारीव धावतु ।
उत्तिष्ठ देवि किं शेषे वरदाभयशोभिते ।। 55

पाहि दुर्गेऽतिदुष्टेभ्यो भयं विन्दति मामिह ।
दुग्धे तिले घृतं तैलं मुग्धे घण्टाध्वनिं यथा ।। 56

मुदा त्वां सर्वगां देवीं सदा पश्यन्ति सूरयः ।
प्रपञ्चसृष्टेस्त्वं पूर्वं ब्रह्माणी सहिताम्बिके ।। 57

अजीजनस्त्वं धातारं शाश्वतं शिवमच्युतम् ।
स्थलीकमलसङ्काशं पादलक्ष्म तवेश्वरि ।। 58

माहिषे मस्तके भाति विद्युल्लेखेव भास्वरा ।
मूढोऽयमिति मा मंस्थास्स्मर्ताहं ताः समागताः (?) 59

त्वया विना न किञ्चिञ्च दृश्यन्ते श्रूयतेऽपि वा ।
वन्दे विन्ध्याचलकुचां विन्ध्याचलनिवासिनीम् ।। 60

सन्ध्यासु पूजयसि चेद्धाता गर्भं दधातु ते ।
कुरुविन्दमणीन्द्राभमरविन्दलसन्मुखम् ।। 61

अहो तादृक् तवशिवे महो नो राय आभर ।
अखण्डवेदवाक्यार्थे अखण्डैकरसे शिवे ।। 62

अभयामद्वयां च त्वां सुभगामहमश्रवम् ।
चतुःसाधनसम्पन्न चतुरानुभवात्वियम् ।। 63

परं ब्रह्मेयमेव श्रीर्नह्यस्या अपरं च न ।
भवत्पादाम्बुजद्वन्द्वभवन्माध्वीकषट्पदी ।। 64

रुद्रभाग्याच्छचीपत्नी इन्द्रपत्नी महीयते ।
पापाधिक्याद्व्रजामस्त्वां सापायाऽऽमयवानपि ।। 65

ग्रीवातिगश्वसनवान् जीवाति शरदः शतम् ।
साष्टोत्तरशतावृत्त्याभीष्टोदयमहामनुम् ।। 66

विष्णुवज्जायते गौरि भूष्णुरात्मा फलग्रहिः ।
जपाकुसुमसङ्काशां कृपाबालमहालताम् ।। 67

आर्यां सेवे विनीतायां सूर्याभां श्रियमीश्वरीम् ।
ताम्बूलकबलैर्दिव्यैस्ताम्बूलितमुखाम्बुजान् ।। 68

शिवदालिगता यासा शिवा नश्यत्तमा भव ।
तथा प्रपद्ये त्वां मातर्यया नद्यः समुद्रागाः ।। 69

यथावृतवृतं याति यथा मासा अहर्जरम् ।
यत्रानन्दाश्च मोदाश्च मुदप्रमुद आसते ।। 70

मातस्त्वयि दयामूर्तौ तत्रमामृतं कृधि ।
जपन्तस्तव विद्यां च यजन्तस्त्वां हवाम च ।। 71

शर्वाणि दयया धीराः सर्वे साकं सरातयः ।
आनन्दरूपममृतं परं ब्रह्मैव सा शिवा ।। 72

नैव स्त्री न पुमानेष नायमेष नपुंसकः ।
जीर्णोऽप्ययं त्वद्दयया पूर्णया तूर्णमिन्द्रियैः ।। 73

आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ।
सद्गुरोर्लब्धया ब्रह्मरूपया कश्चिदात्मवान् ।। 74

हृद्यया कृपया ते वै विद्ययाऽमृतमश्नुते ।
सर्वगा त्वमहं भृत्यः कीदृशःस्थेम मस्तकः ।। 75

यतो वाचो निवर्तन्ते अप्राप्यमनसा सह ।
ज्ञानादेव तु कैवल्यमित्यादिश्रुतिकोटिभिः ।। 76

जीवन्मुक्तस्ततो मातर्मामा ब्रह्म निराकरोत् ।
साक्षात्कृतायामम्बायां सत्यानन्दचिदात्मनि ।। 77

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
वर्णाश्रमोचितमतिर्वेदारण्येष्वटंश्च यः ।। 78

त्वत्प्रसादादुमे धीरश्चरन् वै मधुविन्दति ।
भूष्णुभ्यां कृष्णजिष्णुभ्यां पूज्ये पुष्णासि पार्वति ।। 79

त्वत्कृपाबलतो विष्णुरिदं विष्णुर्विचक्रमे ।
शारदाब्दमुखी पातु शारदाऽपारदाऽमला ।। 80

त्वत्प्रसादादभून्मातः सुमृकीका सरस्वती ।
पद्माक्षीं पद्मगां वन्दे पद्माक्ष्यादिभिरीडिताम् ।। 81

त्वत्प्रसादात्पद्महस्तां हस्तिनादप्रमोदिनीम् ।
गौरीकल्याणवैभोगं ऊरीचक्रुः स्त्रियोऽप्यथ ।। 82

जम्भितोग्रकिणैरङ्गैर्नदीनां वितनोषि ते ।
सहस्त्रादिमहास्वेदैः सहस्त्राणि सहस्त्रशः ।। 83

तत्तत्कालेष्वहल्यायै जारोऽपिखलु यज्वभिः ।
इज्यन्ते त्वत्प्रसादात्तैर्विश्वस्मादिन्द्र उत्तरः ।। 84

कन्याप्यर्जति भाग्यादिलाभाय शुभकर्मसु ।
त्वत्प्रसादातिशुद्धाङ्गी इन्द्राणीमासु नारीषु ।। 85

एक द्वित्रिचतुष्पञ्चषट्सप्ताष्टादिरूपकम् ।
त्वत्प्रसादान्महातत्वं अग्निमीळे पुरोहितम् ।। 86

गङ्गां भगीरथायाससङ्गां तुङ्गां त्वदाश्रयात् ।
क्रमेण गौरि पश्यामः श्रमेण महता पथि ।। 87

दिव्यालङ्ग्रहमात्राष्टभैरवाभयकृन्मुखाः ।
यतो देवि भवत्प्रीत्यै अतो देवा अवन्तुनः ।। 88

सुगन्ध चर्चितां कुन्दमन्दारकुसुमोज्ज्वलाम् ।
स्तुवे दुकूलवसनां सुवर्णरजतस्रजाम् ।। 89

गाङ्गेयानि च रत्नानि गाङ्गेयानि सृजानि ते।(?)
शतसाहस्त्रदशकान् शतनिष्कान् सहस्त्रशः ।। 90

अस्य द्विपित्साभव रुक्चिचित्सा
सुपूर्णलिप्सास्तु शिवा सुवत्सा ।
श्रीकण्ठलिप्सासदभीष्टलिप्सा
शालान्तरे गौरिव नष्टवत्सा ।। (?) 91

नमो मखेभ्यो मघवन्मखेभ्यो
मुरवाग्रदृग्भ्यो दृगनद्वयेभ्यः ।
दया युतेभ्यः श्रुतिशास्त्रदृग्भ्यो
नमो युवभ्यो नम अशिनेभ्यः ।। 92

महामाये सृजसि हिरण्यगर्भ-
प्रभृत्येतद्भुवनमिवोर्णनाभिः ।
स्वतस्तन्तून्भगवति देवि पश्चा-
दजीर्णात्वं जरयसि सर्वमेतत् ।। 93

शिवं सुरेभ्यः कृपयाम्ब तेऽद्य
शिवे मुनिभ्यः शिवमर्भकेभ्यः ।
शिवं द्विजेभ्यः शिवमेव गोभ्यः
शिवं प्रजायै शिवमस्तु मह्यम् ।। 94

वेदान्ताद्यैः परितोघोषयित्वा
शक्त्याकारा प्रतिजातं महेशि ।
सर्वत्रैव रमसेऽस्मिन् प्रपञ्चे
पूर्णा पश्चात् उत पूर्णा पुरस्तात् ।। 95

नामानि शम्भुं नतकल्पपादं
परमा पतिस्तुत्य पदाम्बुजद्वयम् ।
कुमारविघ्नेशकुतूहलास्पदं
उमासहायं परमेश्वरं प्रभुम् ।। 96

वर्षार्थनियमादस्य हर्षान्प्रजपतोऽभवत् ।
वेधोऽङ्गना प्रयच्छन्ति(न्ती)मेधां देवी सरस्वती ।। 97

घोरवृश्चिकदुःस्वप्न चोरसर्पादिशान्तये ।
गोत्रात्मजास्तुतिं पुण्यां रात्रौ रात्रौ सदा पठेत् ।। 98

स्तुत्या पूजयतां भक्त्याऽमर्त्यां श्रेयः परम्पराम् ।
शर्वेण सा ददात्यम्बा सर्वमायुरुपासताम् ।। 99

सहस्रकृत्वः पुत्रार्थी स घस्रे प्रजपेद्यदि ।
वशगस्तस्य तनयो दशमे मासि जायते ।। 100

शान्त्या मुमुक्षयाथर्वयजुरृक्सामशालिनाम् ।
पाहि मुक्तिं शिवे देहि सा हि श्रीरमृता सताम् ।। 101

विश्रुतैः श्रुतिपदैः कमनीयं
भव्यमव्ययमिदं भगवत्याः ।
(दिव्यचित्र) यः पठेत्त्रिदिनं भजनीयं
तस्य नायुषि भवेत्किल सत्यम् ।। 102

।। इति श्रीशिवरहस्ये द्वादशाम्शे
देवीवेदपादस्तवो नाम
पञ्चविंशोऽध्यायः ।।



## ।। षड्विंशोऽध्यायः ।।

**स्कन्द उवाच -**

स्तौमि देवं सदा भक्त्या साम्बं रुद्रार्थपद्यकैः ।
कृताञ्जलिरहं देवं भक्त्या युक्तो मुनीश्वर ।। 1

तन्मत्तः संस्तवं पुण्यं शृणु सर्वार्थसाधकम् ।
सहैभिः श्रूयतां तात जैगीषव्य महामुने ।। 2

येन स्तवेन स्तुवतां देवी मुक्तिं प्रयच्छति ।
रुद्रमन्त्रार्थबोधाढ्यं भक्तिदार्ढ्यप्रवर्धनम् ।। 3

**स्कन्द उवाच -**

पूर्णानन्दचिदात्मकोऽप्यपहतः स्वाविद्यया हृद्यया
तल्लीलादिविलासमोहितमना विस्मृत्य रूपं निजम् ।
जीवत्वं समुपेत्य नित्यमनया वृत्या तया प्रेरितः
यः शश्वन्नृवदश्ववच्च गजवद्गोवच्च नानाविधान् ।। 4

वेषानाकलयन् विधाय बहुधा कर्माणि तत्साधना-
न्यत्यन्तोन्नतनीचमार्गगमनश्रान्तः पुरेष्वावसन् ।
कामिन्या कमनीययातिकमनः स्वाविद्यया संसरन्
पुण्यापुण्यवशाच्चिरेण परमां विद्यां प्रियामाप्य च ।। 5

श्रीरुद्राय नमः समस्तजगदुत्पत्तिस्थितिध्वंसित-
क्रीडेच्छासमुपात्तदिव्यवपुषे धातुर्विधात्रे हरेः ।
रक्षित्रे नितरां हरस्य च पराहन्ताकृतेःसाकृते-
भर्त्रे भक्तजनस्य वञ्छितसमस्ताभीष्टदात्रे सदा ।। 6

---

इत आरभ्य श्रीरुद्रार्थविवरणात्मकपद्यानां साधुत्वे विशिष्टप्रज्ञावन्महाशया एव प्रमाणम् ।

एकः सन्नपि कार्यकारणचिदाकारैस्त्रिभिर्योऽष्टधा
त्रेधाकेवलमेकधा च निखिलं विश्वं चरं चाचरम् ।
स्वातन्त्र्येण बिभर्ति तस्य कुरुते जन्मादि तं भासय-
न्नन्तर्व्याप्य बहिश्च देव भवते साम्बाय तुभ्यं नमः ।। 7

दुर्विज्ञेयनरश्चतुर्मुखमुखानामप्यनेकाकृतिः
सर्वेश स्वयमेवमादिचरितैर्यः सर्वतः सर्वदा ।
सर्वं विश्वमवन् शिवः स्फुटतपाः सर्वात्मना दृश्यते
व्यक्ताव्यक्ततताराय ते भव नमस्तस्मै च विश्वात्मने ।।8

उग्र त्वां नमसा प्रसाद्य जगतां ते निग्रहानुग्रह-
व्यग्रस्योग्रतमाः तथा शिवतमा घोरा अघोरातनूः ।
देवस्तौमि नमस्करोम्यभयमप्यद्यैव याचे विभो
त्वत्तः कः शरणार्थिनां शरणदः श्रीरुद्र शम्भो विभो ।। 9

वागादि स्वयमेव बोधयति यः संर्वं च वाग्रूपया
प्रीत्या साधुजनं च वेदयति यः श्रुत्या च धर्मादिकम् ।
भक्तानां किल योगिनां नयति यो मन्त्रेण तारात्मना
योऽसौ द्रावयति स्वयं द्रवति वा नादान्त एव प्रभुः ।। 10

कल्पान्ते भुवनानि रोदयति यः सर्वारुतं यस्य तां(?)
सर्वान् द्रावयति स्वयं द्रवति च रोरूयमाणो नरान् ।
शब्दब्रह्ममयीं करोति च रुतिं यः सर्ववेदान्तिकां
धात्रे यश्च रुतिं ददाति भगवान् रुद्रप्रभो तस्य ते ।। 11

मन्युः कोप इति प्रपञ्चहरणे शक्तिः प्रसिद्धास्ति या
तस्यै वेद नमो ऽस्तु तां प्रशमयन् त्रायस्व नः सन्नतान् ।

सोमं शल्यमनीकमग्निरभवद्विष्णुः स्वयं तेजनं
पर्णान्यप्पतिरास यस्य निगमाः ख्यातस्य तस्मै नमः (?)

ते देवैः सुमहेषवेऽपि च फणीन्द्रज्यं सुमेर्वात्मकं
यद्धन्व प्रणवात्मकं त्रिपदया सज्यं मदं यद्धनुः । (?)
तस्मै चास्तु नमस्तवापि च धनुर्बाणोद्यतास्तां नमो
बाहुभ्यामथवा खिलेभ्य उतते बाहुभ्य एते नमः ।। (?)13

भक्तानां सुगमं महाघहरणं लोकाधिपत्यप्रदं
राज्ञां चानमतां प्रसादसुमुखं श्रीकाश्यपाराधितम् ।
योधाकारमुमासहायमचिरात् आकर्णकृष्टे शरं
चापे भास्वति सन्दधानमनिशं रुद्रं युवानं भजे ।। 14

भक्तानां सुखदायिनी भवति या ख्याता तवेषुस्तया
यच्चातीव शिवङ्करं तव धनुस्तेनापि याचे सदा ।
चक्राद्यायुधसंहतिस्तव सदा दिव्येषुधिर्वा तया
चास्मान् देव दयावशेन सुखय श्रीरुद्र शम्भो प्रभो ।। 15

आत्रेयर्चितमन्नदं प्रणमतां दुर्भिक्षदोषापहं
शम्भुं स्यन्दनसंस्थमीशमुमया सार्धं ज्वलन्तं श्रिया ।
शूराकारमतीव सस्मितमुखं संस्तूयमानं सुरैः
इष्वासेन करं प्र,न्नहृदयं भक्तेष्टदं भावये ।। 16

योऽसौ शं तनुते दयामयतनुः प्राणिभ्य एवं गिरै
कैलासे गिरिशात्मना जलधरैः पर्जन्यरूपेण च ।
वैखर्यामयि वाचि वाच्यविधये ओंङ्कारमय्यां गिरे(रि)
ध्येयत्वेन च संस्थितः स्वयमहोऽखण्डाम्बुधारानिधिः ।।

तस्यां क्रूरतया समस्तजगतां दुःखातिविध्वंसिनी
या ते रुद्र शिवातनोरिह तया चानन्दचिद्रूपया ।
स्मर्तॄणामधिकं सदा मुखतया युक्तस्त्वमस्मान् मुहुः
पश्यानुक्षणवीक्षणैरभिमुखं श्रीरुद्रशम्भो प्रभो ।। 18

एवं गोधनवर्धनं प्रणमतां श्रीकाश्यपाराधितं
शम्भुं समेरमुखाम्बुजं त्रिणयनं बालेन्दुगङ्गाधरम् ।
श्रीशैलेन्द्रसुतासहायममलं भस्मोरमालङ्कृतं
सर्वेषामधिनाथमीशमनिशं ध्यायेत्पशूनां पतिम् ।। 19

देवानां शरणार्थिनां प्रणमतां सम्प्रार्थनानन्तरं
हन्तव्या स्त्रिपुरासुरा प्रति युधि क्षेप्या गृहीत्वा इषुम् ।
हस्ते यां गिरिशन्त सम्यगपि या हर्तुं बिभर्षि स्वयं
हस्तेन त्रिपुराख्यतूलदहन क्रीडां विधाय क्षणात् ।। 20

देवत्रायक नित्यमध्वरगिरा अभ्रस्य चैवं गिरेः
कैलासस्य च नाथतां कुरु भवद्भक्तान् प्रति क्षेमदाम् ।
हस्ते ह्याभिमुखे च किञ्च कृपया त्रायस्व पापैश्च मां
मा हिंसीः पुरुषाग्रगण्यमनिशं त्वत्पादसंसेवनात् ।। 21

सर्वं गोमहिषाश्वदास कुलमप्येवंविधेत्यदरा-
न्नीरोगं निरुपद्रवं च सततं श्रीरुद्रसाम्ब प्रभो ।
श्रीकैलासनिवास सर्वनिगमाधीश प्रभो सर्वतः
सर्वं नः सुतदारबान्धवजनक्षेत्रादिकं स्याद्यथा ।। 22

नीरोगं सुमनस्कमेव च तथा त्वां सर्वदुःखापहं
सर्वैश्वर्यविवर्धनं प्रणमतां सर्वाधिकं सर्वदा ।
सर्वैश्वर्यगुणाकरं शिवकरं कल्याणलीलामृत-
स्तोत्राकारतया शिवेन च सदा नित्यं स्तुमः सन्निधौ ।। 23

लोकानामपमृत्युदोषहरणं देवोपघातापहं
रुद्रं गौतमनायकेन मुनिना गोमायुना चार्चितम् ।
हासक्लिष्ट(ध्वस्त)पुरत्रयं गिरिधनुष्पाणिं रथाधिष्ठितं
सङ्ग्रामोचितदिव्यवेषमनिशं ध्यायेत्पुरारिप्रभुम् ।। 24

कार्योपाधिवशेन सन्नपि निराकारोऽपि जीवात्मको
यस्यांशः स्वयमीदृशं वपुरभेदेनानुगृह्णासि यत् ।
जन्मव्याधिजरादिदुःखदमहासंसारकष्टज्वर-
प्लुष्टानां वितराशु दुर्लभमपि त्वद्भक्तिमात्रौषधम् ।। 25

भीतानामभयार्थिनां अभयदेष्वग्रेसरोऽयं भिषक्
सर्वेषां भिषजां किलेति निगमा यं संस्तुवन्त्यादरात् ।
दुर्ज्ञेयोऽपि परात्परोऽपि जगतां त्राणाय मोहाय वा
देवेष्वेकतमोऽहमस्मि इति यः प्रादुर्भवन् क्रीडति ।। 26

क्रीडायां सुखरूप एव विजिगीषायां जयात्मा स्वयं
भक्त्यात्मा व्यवहारके भवति च द्युत्यात्मको द्योतते ।
नित्यं स्तोत्रमयः स्तुतावपि गतौ गन्तव्यरूपोऽथवा
वाय्वात्मा बहुधा विभाति हि बहुष्वेतेषु चैकोऽपि यः ।। 27

देवानामपि यः स्वयं मुखमभूत् ब्रह्मादिकानां प्रभुः
दिव्यज्ञानवतां प्रधानपुरुषः सर्वस्य लोकस्य यः ।
स्त्रष्टासन् निखिलं जगच्च सृजसि विष्णुर्जगत्पालने
यः सर्वाणि जगन्ति संहरति चाप्यैश्वर्ययोगान्मुहुः ।। 28

स्वातन्त्र्याधिकवाग्भिरेवममरानाज्ञाप्य चैवं विधान्
यः स्वाभाविकशक्तिमानतितरां अर्हः समर्थः प्रभुः ।
अस्मद्धिंसनतत्परानरिगणान् जातीस्तथा रक्षसां
सर्वानाशु विनाशयन् मम पुरः प्रत्यक्षमाविर्भवन् ।। 29

देवः सोऽयमधिब्रवीतु कृपया मा भैष्ट युष्मानहं
भीतिभ्यस्त्वितिपालयाम्यथ भवाच्चेत्येवमस्मान् प्रभुः ।
शम्भुं दुःसहगर्भरोगहरणं रक्षाकरं सर्वथा
रक्षोभूतभयापहं प्रणमतां दीर्घायुरर्थप्रदम् ।। 30

कण्वाराधितमिन्दुमौलिमनिशं व्यालोलवीतोज्ज्वलं
प्रोद्यत्पावकवर्चसं त्रिणयनं कालारिमीशं भजे ।
यः पूर्वाचलहेमरत्न शिखरप्रस्थोपलोपत्यका-
कान्तिव्याप्तिवशाद्रसातलतमः सम्पर्कतो वान्वहम् ।। 31

उद्यन् कुङ्कुमपङ्कताम्र उदितः सिन्दूरपूरारुण-
स्तप्तस्वर्णसुकान्तिरूर्ध्वमधसंसर्पन्(?)क्रमाद् दृश्यते ।
कल्याणैकनिधिः स्वयं स्वयमसावादित्यरूपः शिवो
ये तुल्याकृतिहेतिभूतिविभवा रुद्रेण रुद्राः परे ।। 32

देवस्यानुचराः समस्तजगतां कर्मानुरूपं फलं
दातुं दिक्षु सहस्त्रशः क्षितिमिमामध्यासते चाभितः ।

कृत्यस्याऽकरणात्(अकृत्यकरणात्) आलस्य तः कामतः
तस्मात्पापमजस्रमार्जितमभूदस्माभिरज्ञैस्ततः ।। 33

तेषां तस्य महेश्वरस्य विभोर्योऽस्मान्विहारादरः
क्रोधश्चास्ति तमीदृशस्तुतिनमस्कारैरपाकुर्महे ।
क्ष्वेलस्यामलकन्धरस्फुरदुरुज्वालाग्निवर्णः शिवः
तेजोमण्डलमध्यवर्तिविलसन्मार्ताण्डमध्यं वसन् ।। 34

सायं किञ्चिदुदञ्चिताङ्कुरतमःसामर्थ्यलीनां निशा-
क्रान्ते ध्वान्तमुपानयच्च परितःपङ्कप्रदेशान्तरे ।
भूयिष्टं ग्रसनक्षणं घृणिगणः कालाभ्रनीलानिलो ?
बिभ्राणोऽस्तमयन् विलोहितनिभःप्रातस्तथैवोदयन् ।। 35

. योऽसौतिर्यगधश्च सर्पति जगद्यात्रां सदा निर्वहन्
दुर्ज्ञेयोऽपि तपः क्रियाभिरखिलैर्वेदैःश्रुते मेधया ।
येनेयं भगवन्तमस्तमचिरात् यान्तं वनान्ताद्गवां
ग्रामप्राप्तिनिमित्तमेकमनसः पश्यन्ति गोपा अपि ।। 36

अस्तं यास्यति भानुरन्धतमसं दृष्टिं पिधास्यत्यहो
स्वामिन् चेदिह कुत्सयिष्यति मृगान्तो भर्त्सयिष्यत्यपि ।(?)
अम्भः कुम्भमिदं कदा निजगृहं नेष्याम इत्याकुलाः
स्वेदाम्भः कणसिक्तकञ्चुकसमालक्ष्योच्चलच्चूचुकाः ।। 37

भ्रश्यद्भूषणजालमाकुलकचं व्यालोलहारं तथा
धावन्त्यः परिचारिकाश्च वनिता अङ्गैरपाङ्गैर्मुहुः ।
सन्ध्याख्योद्धरणाग्निहोत्रसमये कर्मैक चित्ता द्विजा-
श्चावासाभिमुखानि पक्षिपशुकीटान्युग्रभूतान्यपि ।। 38

सोऽयं नः सुखयत्वहर्निशमुपस्थानानि कालार्थिभिः
दृष्टोऽस्माभिरपि प्रभुः प्रशमयन्नेनः कृपाम्भोनिधिः ।
यं ध्यायन्निह वेदपारगकुले जातिस्मरो जायते
रुद्रं तं वरदं सुवृष्टिफलदं श्रीकश्यपराधितम् ।। 39

भास्वन्मण्डलगं हिरण्मयतनुं चन्द्रप्रभामण्डलं
साम्भं स्मेरमुखाम्बुजं मुनिगणैरासेव्यमानं भजे ।
नीलात्युज्ज्वलकन्धराय च सहस्राख्यात्मने वृष्टिभिः
पर्जन्यात्मतया भुवं च परितः सेक्त्रे तथा योनिषु ।। 40

गर्भणां पुरुषात्मनां च विविधैर्बीजैर्विधात्रे नमो
रुद्रायास्तु नमस्करोम्यथभटा येचास्य तेभ्यो नमः ।
सन्तानैकफलार्थिनां प्रणमतां सन्तानरूपं प्रभुं
स्वात्मानं हृदि भावयन्तमनिशं शम्भुं कृपाम्भोनिधिम् ।। 41

कान्तं शारदचन्द्रकान्तिसुभगं शान्तं शिवं शीतलं
साम्बं दिव्यवपुर्दधानममलं सिह्मासनस्थं भजे ।
संरम्भस्त्रिपुरेषु दुःसहतरो यः पूर्वमासीद् ध्रुवं
स्यादस्यापि स एव सेवकजनेष्वस्मासु दीनेष्वपि ।। 42

विद्यैश्वर्ययशःश्रियां च निलयस्य ज्ञानवैराग्ययोः
दाक्षिण्यैकतनोर्दयामयतनोः पाल्येष्वयुक्तो हि सः ।
तस्माज्ज्यामितरां प्रमुच्य धनुषः कोट्योर्द्वयोर्यौऽचिरं
वद्धायाश्चतवे(?)....वस्तिष्ठन्ति ताः प्राणिनाम् ।। 43

संहर्त्रीरुपसंहरन्नभिमुखीकुर्वन्ति नास्मान् यया
तूणीरेषु तिरोहितान् कुरु तथा देवेश तुभ्यं नमः ।

देवानेकशतेषुधिर्व्रज सहस्राक्षः स्वमेवं धनुः
कृत्वा वीक्ष्यमिदं मुखानि निखिलानां चैवशीर्णानि ते ।।44

निःशेषं नितरां विधाय कृपयाऽस्माकं प्रसादार्थिनां
सद्यः शान्तमनाः शिवो भव सहस्वाद्यापराधान् बहून् ।
सुप्रीतस्य कपर्दिनोऽस्त्विह पिनाकाख्यं धनुः सज्यम-
प्यद्यास्मत्कुशलाय वीज्यमिषुधिश्चायं पुरोयत्पुरा ।। 45

बाणैः पूर्णतरोऽपि वीतविशिखोभूयात्तदीयाश्च याः ।
देवस्यैव वरेषवोऽप्यपहतास्ताःसन्तु लीनाः क्रमात्
तीक्ष्णारोऽपि महासिरद्य भजतां भक्तेषु मन्दारतां
कोशःखड्गसहायवानपि विनाभूतोऽस्तु तेनाधुना ।। 46

एवं शान्तमनाः प्रशान्तविविधानेकायुधाः सन्ततं
भक्तान् नः शरणागतान् करुणया पायादपायाच्छिवः ।
युद्धे वैरिभयापहं प्रणमतां श्रीरुद्रमाराधितं
दैवं नारदनामकेन मुनिना नानायुधालङ्कृतम् ।। 47

उद्यद्भास्करकोटिदीधितितनुर्दीप्तोत्तमाङ्गोज्ज्वल
त्कान्तिं भीषण भोगिभूषणमहं ध्यायेत मीढुष्टमम् ।
रुद्रो हेतिधरोऽधुना.....हस्ते तवास्तेऽधुना ।। 48

अस्मान् पुत्रकलत्रपुत्रसहितान् सर्वान् प्रसन्नान् सदा
सर्वास्माद् दुरिताच्च रक्ष भगवन् दीनान् दयाम्भोनिधे ।
स्वामिन् रुद्र नमोऽस्तु देवधनुषे चानाततज्याय ते
उद्युक्ताय शराय चोद्यतगदाचक्रादिसङ्घाय च ।। 49

दुष्टान् धर्षयते दृढाय विविधायैवंविघायायुध-
स्तोमायाद्य नमोऽस्तु तेऽद्य भगवन् याभ्यां रिपून् विध्यसि
बाहुभ्यां बिभिमो वयं तव धनुर्बाणोद्यताभ्यां तत
स्वस्वन्येषु महाभुजेष्वपि मुहुस्ताभ्यामुभाभ्यां नमः ।। 50

यद्वा दक्षिणवामबाहुनिवहाभ्यां ते नमः कृत्स्नशः
तस्मैचोत्तमसायकाय धनुषे तस्मै नमः कुर्महे ।
स्वामिन्नद्य वयं पुनः पुनरिदं चाशास्यमाशास्महे
यः पार्श्वेऽस्ति तवेषुधिस्त इषवो यास्ताश्च दूरे पुनः ।। 51

व्यूहैर्वैरिजनस्य पातय तथा हिंस्त्रोऽपि....धन्वन-
स्तत्रैवास्त्विह पुत्रपौत्रसहितान् पुष्णातु नः सर्वतः ।
तुभ्यं देव सदा नमोऽस्तु भगवन् विश्वेश्वरायस्फुर-
द्वह्नयर्केन्दुदृशे पुरत्रयभिदे कालाग्निरुद्राय च । 52

क्ष्वेलश्यामलकन्धराय महतां(ते)देवाय सर्वेश्वरा-
येशायास्तु सदाशिवाय महते देवाय शश्वन्नमः ।
स्वात्मानं हृदि भावयन्तमनिशं रुद्रं मुहुर्ध्यायतां
युद्धे सर्वरिपुप्रणाशनमरिस्थानैकविध्वंसिनम् ।। 53

नम्राशेषसुरेन्द्रमौलिविलसत्पादाम्बुजं कारणं
सर्वेषां जगतां पिनाकिनमहं ध्यायामि साम्बं प्रभुम् ।
चन्द्रोत्तंसमचिन्त्यमक्षरमजं संसारदुःखापहं
मध्येशुद्धसुधाब्धि चिन्तितमणिद्वीपे शयानं भजे ।। 54

चारुस्मेरमुखं सुमौक्तिकनिभं मध्ये सुधामण्डल-
स्यासीनं जगदेकरक्षणपरं ध्यायामि साम्बं सदा ।। 55

**स्कन्द उवाच -**

श्रीरुद्रादिपदार्थबोधनशिवध्यानानुसन्धानवि-
ज्ञानानन्दविधानपादनमनस्वान्तेन कान्तेन च ।
विश्वेशस्मरणादरेण वशिना ज्ञेयार्थ एष क्रमात्
शान्तेनैव विभूतिभूषणमहं लिङ्गार्चकेन त्वया ।। 56

।। इति श्रीशिवरहस्ये द्वादशाम्शे
रुद्रार्थविवरणं नाम
षड्विंशोऽध्यायः ।।



## ।। सप्तविंशोऽध्यायः ।।

**स्कन्द उवाच -**

स्वामी त्वं स्वमिदं जगत्तदधुना शक्तोऽपि सन्मन्युना
संहर्तुं कृपया विभूतिविभवैर्व्याप्यासि शान्तात्मना ।
कुर्वन्निग्रहमप्यनुग्रहमशेषं शङ्कर त्वं प्रभो
तस्मै तेऽस्तु नमो हिरण्यपतये शम्भो हिरण्यात्मने ।। 1

अङ्गं यस्य हिरण्यभूषणगणोद्दीप्तं हिरण्यप्रभं
बाहू हृद्यतमौ हि तौ च रमणीयौ भक्तिभाजां सताम् ।
पुण्यापुण्यविमिश्रकर्मफलभोक्तृणां सुरणां नृणां
रक्षोयक्षपिशाचकिन्नरफणीन्द्राणां पितृणामपि ।। 2

सङ्घातान् विविधान् विधाय बहुधा सेनःस्वकीयाःस्वयं
स्वामित्वेन च संस्थितो नयति ता बह्वीर्गतीर्यः सदा ।
यश्चेन्द्रादिगिरीश्वरात्मकतया सर्वां दिशं पालयन्
आदित्यात्मतयोदयास्तमथ सञ्चारैर्दिशः कल्पयन् ।। 3

प्रत्यक्षः सदुपास्यमूर्तिरिह यत्तेजोनिधिर्दृश्यते
तस्मैतेऽस्तु नमो नमः क्षितितले रुद्रास्तदंशाःपरे ।
ये वृक्षाकृतयो वसन्ति विविधा वृक्षेषु वा संस्थिता
ये ब्रह्मादिपिपीलिकान्तनिखिलप्राण्यात्मकाश्चेतनाः ।। 4

ब्रह्माण्डाख्यमहाक्षितावतितरां रूढाश्च फालाक्षिणा
भोगान्ते निजकर्मणां च पुनरप्यावर्तमाना मुहुः ।
ये रुद्रा हरिताभकेशनिवहास्तेभ्योऽपि योऽसौ पतिः
ब्रह्मादीनपि पाति तैश्च रमते तेषां प्रधानः पतिः ।। 5

तस्मै विश्वभुजे नमो नम इदं प्रत्यक्षमाविस्फुर
श्रेणीपिञ्जरमूर्तयेऽतिविमलज्योतिर्मयाङ्गाय ते ।
चिद्रूपाय चिदात्मनेस्वयमभिव्यक्ताय ये लौकिका
मार्गा येऽपि च वैदिका बहुविधा धूमार्चिराद्या अपि ।। 6

तादृङ्मार्गविदश्च ये क्रतुषु ये त्वां द्रष्टुभावंगता
तेषां ते पतये नमोनम इदं बभ्रुत्विषे सर्वदा ।
रक्षित्रेवृषभस्य दिव्यवृषभारूढाय पापात्मनो
क्षुत्तृष्णाऽपचयामयैश्चविविधैराविध्यसे यानि च ।। 7

रक्षांस्यध्वरभक्षकानि सततं तेषां च होत्रे मुहुः
सोमायौषधि सम्भवैरविफलैः सञ्जीवयित्रे नृणाम् ।
अन्नानां पतये नमोनम इदं ते नित्ययूने सदा
नीलात्युज्ज्वलमूर्धजाय विलसद्यज्ञोपवीताय ते ।। 8

पुष्टानां च सतां शमादि सुगुणैर्नाथाय वाचो धियः
कायस्येन्द्रियसञ्चयस्य च गृहक्षेत्रादिकानां तथा ।
ग्रामाणां धनधान्ययोरपि पशुन्यूहस्य सत्सन्तते-
धर्मस्येति च पुष्टयो दशविधा याःस्युर्दशानामपि ।। 9

एतासां पतये नमो नम इदं संसारवृक्षच्छिदे
हेत्यै संसृतिजन्यदुःसहमहाहिंसास्वरूपाय ते
लोकानां पतयेऽति दुःसहमहासंसारखिन्नान् जनान्
कृत्वा तानथ रक्षते करुणया श्रीपञ्चवक्त्रात्मने ।। 10

देवेशाय नमो नमो भगवते रुद्राय सज्यं धनुः
शश्वद्धारयते समस्तमवते तेनैव विश्वं सदा ।

हृद्येशो निवसन्नवन्वपुरिदं क्षेत्रं स्वमायामयं
मायायन्त्रसमास्थितानिव सदा जीवान् मुहुर्भ्रामयन् ।। 11

क्षेत्रज्ञः स्वयमेव पश्यति श्रृणोत्यास्वादयत्यास्पृश-(?)
आनाद्यं सकलं च वेत्ति सुखदं यत्साधनं केवलम् ।
आविर्भूय भुवि स्वयंवसति यः क्षेत्रेषु लिङ्गात्मना
क्षेत्राणि स्वयमेव रक्षति सदा यः क्षेत्रपालात्मना ।। 12

क्षेत्राणां पतये महेश अवते तस्मै नमस्तेनमः
सूतायास्य महारथस्य जगदाधारस्य सूतात्मना ।
कल्पादौ च महामुनीन् प्रतिपुरणानां प्रवक्त्रेऽध्वरे
सोमायाभियुतस्य केवलमहङ्कारे निरूढाय च ।। 13

भूतं भावि च वर्तमानमहमित्याकारिकायां परा-
ऽहन्ता तत्र भवाय केवलमहन्तव्याय सत्यात्मने ।
सर्वेषां वनदेवतात्मकतया गोप्त्रे वनानां नमः
तुभ्यं देव नमोऽस्तु लोहितनिभायाशेषवागात्मनाम् ।। 14

शब्दानां प्रथमप्रवर्तकतया लोके हितायाभितः
स्थित्वा पालयते निषादपतये शक्त्रे बृहद्बाहवे ।
वृक्षाणां पतये नमो नम इदं मन्त्रैरुपास्याय ते
ऽवेद्यायोपनिषद्रहस्यवचने लीनाय चिद्रूपिणे ।। 15

साक्षित्वेन च कर्मणापिपरिच्छेत्रे वणिवतृणां
(साक्षित्वेन च कर्मणापि परिच्छेत्रेऽपरिच्छेद्याय ते)
वाण्या वाच्यतया पुनः पुनरभिव्यक्ताय च स्वामिने ।

कक्षाणां गिरिगुल्मगह्वरनदीकुण्डात्मकानां सदा
गोप्त्रे तेषु च सर्वतो निवसतां नानाविधप्राणिनाम् ।। 16

अध्यक्षाय वनस्य धर्मगहनत्रात्रे नमस्ते नमो
यस्मिन्विश्वमिदं स्थितं भवति चाप्यन्ते तथा लीयते ।
यः शक्त्या भुवमातनोति विजयी कर्ता धनस्यापि वा
पात्रायार्जयतां धनस्य कृतिनां दत्त्वोत्तमानां धनम् ।। 17

यस्त्राता वरिवस्कृतां करुणया येनैव विश्वात्मना
वारीशात्मतया च वारिणि सदा वासः कृतो येन च ।
भूमात्मा स्वयमोषधीः प्रजनयन् ग्राम्यास्तथारण्यकाः
ताः सोमात्मतया च पाति सततं तस्मै नमस्ते नमः ।। 18

उच्चैर्घोषवते महार्णव महामेघादिरूपाय ते
शम्भो पाहि शिवेति भक्तनिवहैरुद्घुष्यमाणाय च ।
यश्चाक्रन्दयते रणोद्यमसभाकोणे भटानां मुहुः
यः शक्तोऽपि जगन्ति जेतुमखिलान्येकः स्वयं लीलया ।।19

पत्तीनां च पतिः पदानि शतकोटीनां च नेता स्वयं
तस्मै देव नमो नमोऽस्तु भवते कल्पान्तकाले जगत् ।
कृत्स्नं वीतमभूच्च येन हरता कल्पान्तरात्रिर्यया (?)
योऽसौ केवल एक एव हि शिवः कृत्स्नात्मकः शिष्यते ।।

भक्तं शोधयति प्रसीदति पुनस्तस्मै च शीघ्रं सदा ।
वत्सं गौरिव चानुधावति परित्रातुं स्वभक्तं जनम् ।
नेत्रे ब्रह्मविदामनेकविधिसत्वानां च तस्मै नमः ।। 21

मेधाराज्यवशीकृपा वरवधू शत्रुक्षयाद्यं फलं
भक्तानां प्रदिशन्तमीशमृषिणा मण्डूकनाम्नाचिरम् ।
ध्यातं रुद्रमहं भजे सुरतरोर्मूले निषण्णं सदा
गौर्या मौक्तिकभूषणाङ्गममलं बालेन्दुगङ्गाधरम् ।। 22

**स्कन्द उवाच -**

नमस्ते रुद्राद्यैः प्रतिपदनमोऽन्तैर्मनुगणैः
ऋषि देवध्यानप्रतिमचन वाक्यार्थमधुरैः ।
निरुक्तैरुक्तोऽर्थः श्रुतिशिरसि बोधाय सुगमः
उपायस्ते ज्यायान् अकथयदुमायै स भगवान् ।। 23

गौरीनायकभाषतो यदगजा प्रीतानु वाकद्वयं
तस्यार्थं विवृणोमि शङ्करमुखाच्छ्रौतं यथा निर्गतम् ।
तत्ते स्वस्ति भवौषधं हरिहरब्राह्मादिमृग्यं मुने
भाष्यं त्वेतदपारशिष्यसहितं संश्राव्यमेतत्त्वया ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
रुद्रार्थविवरणं नाम
सप्तविंशोऽध्यायः ।।



## ।। अष्टाविंशोऽध्यायः ।।

**स्कन्द उवाच -**

हर्तुं भर्तुमकर्तुमाशु च जगत्कर्तुं कृतं चान्यथा-
कर्तुं दुर्घटमेव सङ्घटयितुं शक्तस्त्वमेकःप्रभुः ।
तस्मात्ते सततं नमोऽस्तु विजयाशक्त्याभिभूतंजग-
त्सर्वं स्वात्मनि कुर्वते च सहमानायापराधान् सताम् ।। 1

साधून् पालयितुं रवलांश्च नितरामाविध्य तान् हन्त्यलं
यः सेना अभितः परानभिमुखान् तासां च नेत्रे नमः ।
देवेशाय नमो महावृषककुद्भागाधिरुढाय ते
प्रोद्यत्खड्गमहाप्रहारकटवे चौर्याय लीलात्मनाम् ।। 2

चोराणामपि भक्तवत्सलतया संरक्षकायाथवा
तेषां श्रेष्ठतमाय सर्वहरणादन्ते नमस्ते नमः ।
उद्यत्खड्गवते जनेषु नितरां भक्तेषु सक्ताय वा
तूणीरोत्तमधारिणेऽपहरतां साक्षान्महारण्यके ।। 3

व्याधानां पतये नमो नम इदं ते वञ्चनां कुर्वते
यः कुर्वन्नपि विप्रलम्भमभितो व्याहन्यते नापरैः ।
तस्मै ते परितः सदा विचरते हर्तुं परेषां धनं
नित्यं कृत्रिमसाधुवेषमयतां नानाविधछद्मनाम् ।। 4

स्तायूनां पतये नमो नम इदं सम्भारशीलाय ते
दार्ढ्यार्थं नितरां वनेषु सततं त्रातुं जनानाश्रितान् ।
सुव्यक्तं परितः सदैव चरिते स्वामिन्नरण्येऽनिशं
दस्यूनां वसतां नमोऽस्तु पतये तेभ्योऽपि नित्यं नमः ।। 5

ये रुद्राः सदृशास्त्वया धृतमहावज्राद्यनेकायुधाः
तेषां चानुचरा वरायुघधराःस्तोमावितारोऽथवा ।
मर्त्येष्वप्यथ हिंसकाश्च धनधान्यादीन्यलं मुष्णतां
व्याधानां पतये नमोऽस्तु भवते तेभ्योऽपि नित्यं नमः।। 6

उत्कोशासिधरेभ्य आशु नगरे नक्तं चरद्भ्यः सदा
चौर्यायै च हरन्ति ये निशि धनं हत्वैव तेषामपि
नाथायास्तु नमो नमोऽद्य तमहोष्णीषाय तुभ्यं नमः ।। 7

व्याधैःसञ्चरते हरन्ति पृथिवीं ये वा प्रकृन्ता बला-
त्क्षुद्रारण्यगिरिप्रदेशपतयः क्षुद्रक्रियशिक्षिता
हन्तारः कुललुञ्छकाश्च पतयस्तेषां नमस्ते नमः ।।
हस्तेनैकतमेन संप्रतिदधानेभ्यो महेषुं धनुः
सज्यं चान्यतमेन वा पथि करेणात्तं महद्भ्यो नमः ।।

अस्यद्भ्यश्च नमोऽथ कुर्वथ इमे युद्धाय सज्जान्यलं
सज्जे दिव्यधनुष्यमोघशरसन्धानं मुहुर्वेगतः ।
कुर्वद्भिश्च नमो नमः शरवरान् सन्धाय चापे समा-
कर्षद्भ्यो विसृजद्भ्य एव च नमो भूयो नमः सायकान् ।।

ज्यामुक्तान् परितः परान् अभिमुखान् संप्रापयद्भिः शरैः
तैः शत्रून् प्रहरद्भिरेव परितः शश्वन्नमो वो नमः ।
आसीनेभ्य इतस्ततो भुवि शयानेभ्यो गुहाभ्यन्तरे
ऽप्यायासेन च वो नमो नम इदं तेषु स्वपद्भ्यः सुखम् ।।

जाग्रद्भ्यश्च नमो नमः क्वचिदधस्तिष्ठद्भ्य एव क्वचित्
धावद्भ्यश्च नमो नमश्च समुपाविष्टेभ्य एव क्वचित् ।

स्वामिभ्यः सदसां नमो नम इदं चाश्वेभ्य एवापि वा
येषां श्वस्तनवित्तमात्रमपि वा नैवस्ति तेभ्योऽपि वा ।। 11

अश्वाध्यक्षतयेव उज्ज्वलमहास्त्रेभ्यो नमः श्रीमतो
देवस्यानुचराः किरातवपुषः श्रीरुद्रसङ्घाः परे ।
लीलासम्भृतविग्रहा भगवतः तस्यांशभूताः सदा
ये चान्ये परितश्चरन्ति बहवस्तेभ्योऽपि नित्यं नमः ।।12

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं रिपुघ्नं सतां
राजामात्यसमस्तराष्ट्र पुरहस्त्यश्वादि रोगापहम् ।
बर्होत्तंसधरं किरातवपुषं देवं युवानं श्वभि-
र्भूतैश्चावृतमग्रतो मुनिजनैर्ध्येयं सदाभ्यर्चितम् ।। 13

योऽत्रानुवाकत्रयमेतदद्भुतं
योऽर्थं तथा ध्यानमिदं सदा मुदा ।
सन्धाय मन्त्रांश्च शिवस्य भावयेत्
परां च मुक्तिं समवाप्य मुक्तधीः ।। 14

सर्वाभ्यश्च नमोऽस्तु या भगवतः सेनाः समस्ताखिला-
नाविध्यन्ति जगद्धिताय विविधं यास्ताडयन्त्युद्धतान् ।
या उत्कृष्टगणैश्च पत्तिनिवहैः पूर्णाश्च या हिंसिनः
व्यापारान् परिगूहयन्ति कुशलप्रज्ञाविशेषाश्च ये ।। 15

तेषां ये पतयश्च ये त्वनियतं मृत्युं मुहुः संश्रिता
नानाजातिसमुद्भवा बहुविधक्षुद्रक्रिया जीविनाम् ।
ये भूतानथ यानवन्त्यपि च ये ये भूतरक्षोगणा
रुद्राः पारिषदास्तथाधिपतयस्तेषां च ये ये परे ।। 16

ये वा मुण्डितमस्तकातिविविधाकाराश्च ये स्वेच्छया
सिह्मव्याघ्रगजाश्वसैरिभवृषाद्याकारभाजश्च ये
ज्ञानाकारगुणप्रभावविभवैर्नित्यं महान्तश्च ये
क्षुद्रज्ञानगुणप्रधानविभवा ये वा रथाधिष्ठिताः ।। 17

ये योधेषु(युद्धेषु)रथान्वितेषु चरणैर्धावन्ति शत्रून् मुहुः
ये चन्द्रार्कमहीमुखाःसुरगणाः प्राप्ता रथत्वं विभोः ।
ये रक्षन्ति रथान् वहन् स्वयमनारुह्यैव शक्त्या स्वया
ये रुद्राः परितः शिवस्य पुरतः सेनात्वमध्यासते ।। 18

एतासामपि नायकाः सुरवराः ये सूतरूपाः सुराः
ये गृह्णन्ति रथेषु रश्मिनिवहान् सूताज्ञया किङ्कराः
ये स्युर्वर्धनिजातिजा अपि च ये दक्षा रथानां कृतौ
ये जाताश्च कुलालजातिषु तथा ये लोहकाराश्च ये।। 19

नानापक्षिसमूहबोधनविधौ दक्षाश्च ये वै जनाः
मत्स्यादिप्रतिधातका अपि च ये कुर्वन्ति तीक्ष्णानिषून्
ये वा धन्वकृतश्च ये वनमृगव्याधाःसदा ये नराः
नेतारश्च शुनां च वृत्तिनिरता ये वा शुनामाकृतिम् ।। 20

बिभ्राणा अथ ये शुनां च पतयः शम्भोरथांशांशकाः
सर्वे मर्त्यजगद्गताः कुमनुजा विश्वेश्वरांशाश्च ये ।
ये भूमौ दिवि सूर्यचन्द्रधरणीब्रह्माग्निविष्ण्वादयो
ये रुद्राश्च जगन्ति पान्ति परितः पूर्णाः शिवस्यांशतः ।।21
ये सन्ति प्रमदा(था)दिरूपचरिताः सर्वेभ्य एवाधुना
तेभ्यः सम्प्रति पूरुषं स्तुतिनुतिं कृत्वा नमस्कुर्महे ।

शम्भुं दुःसहदुष्टकुष्ठविविधव्याधिज्वरापस्मरो-
द्धर्तारंतंस्मरहं हरं पुरहरं दुर्वासनाम्नार्चितम् ।। 22

भस्मोद्धूलितविग्रहं त्रिणयनं भास्वज्जटामण्डलं
स्वासीनं वृषभे गणैः परिवृतं साम्बं सदा भावये ।। 23

**स्कन्द उवाच -**

श्रीरुद्रं यजुषां च मध्यममहाकाण्डे चतुर्थे स्थितं
संसारामय भेषजं प्रजपतां विश्वेशभक्तिप्रदम् ।
तस्मिन्नर्थयुतो विभासति हृदा मन्त्रानुवाकान् मुदा
चातुर्थः सकलात्मनां भगवतो वक्तुं प्रवृत्तो मुने ।। 24

।। इति श्रीशिवरहस्ये द्वादशाम्शे
रुद्रार्थवर्णनं नाम
अष्टाविंशोऽध्यायः ।।



## ।। एकोनत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

विश्वं यः सततं बिभर्ति समधिष्ठायैव मूर्त्यष्टकं
यस्ताभिस्तनुभिः शिवाभिरनुगृह्णातीह तस्मै नमः ।
यः सर्वत्र सुपूर्ण एव भवति स्वस्मिन् विलीनं जगत्
भूयो भावयति स्थितं भवति तद्यस्मिंश्च यो भाव्यते ।। 1

योगीन्द्रैर्भगवान् अपां स्वयमधिष्ठाता च योऽसौ रुजां
नित्यं द्रावयतां सतां स्वयमधिष्ठाता च सूर्यस्य यः ।
तस्मै नित्यमिदं नमोऽस्तु युगपत्कल्पान्तकाले जगत्
सृष्ट्वैवाशु विहिंसते हि यमधिष्ठाता तथाग्नेरपि ।। 2

आज्ञादण्डधरप्रहारित महामायोरुपाशः पशून्
ब्रह्मादीनवतीह भूतनिवहाधिष्ठानरूपश्च यः ।
तस्मै सर्वसुराधिकाय जगतामीशाय तुभ्यं नमो
नीलग्रीवकलेबराय शितिकण्ठायास्तु तुभ्यं नमः ।। 3

योगीशाय कपर्दिनेऽखिलमहायागेषु दीक्षाभृते
तुभ्यं व्युप्तशिरोरुहाय यजमानाकारभाजे नमः ।
देवेशाय सहस्रलोचनभृते शक्रात्मने ते शता-
न्यत्यन्तोत्तमधन्वबाणविविधानेकायुधानां युधि ।। 4

बिभ्राणाय नमो गिरीश्वरकृतावासाय दिग्वाससे
रश्मिव्रातवृतार्कमण्डलसमाविष्टाय सूर्यात्मने ।
सर्वप्राणिहृदम्बुजेषु वसते तुभ्यं नमो रेतसः
सेक्त्रे दिव्यहिरण्मयस्य च हरेर्गर्भे विधात्रे विधेः ।। 5

शूरायात्तमहेषवे नम इदं स्वल्पप्रमाणाय च
स्वेच्छासङ्कुचिताङ्गकाय च नमस्तस्मै बृहद्रूपिणे ।
ज्ञानाकारवयस्तपोभिरभिवृद्धायस्तु तस्मै नमो
वृद्धायाधिकदीर्घकालवयसां स्तोत्रैः प्रवृद्धाय च ।। 6

सम्यग्वर्धयते स्वभक्तनिवहान् देवाय तस्मै नमः
विश्वाग्र्याय तथा प्रधानपुरुषायेदं नमोऽस्त्वाशवे ।
शीघ्रानेकगतिप्रभेदकुशलायेदं नमः शम्भवे
स्वाविर्भाववते च तासु विविधाकारप्रवाहासु च ।। 7

नित्यं सन्निहिताय ते नम इदं स्थाने महोर्मिष्वपाम्
निष्कम्पा विगतस्वनाः पुनरपां वीचिस्वनाश्चापि या ।
आपस्तासु च सर्वदा निवसते तस्मै नमः स्रोतसाम्
मध्ये सन्निहिताय किञ्च वसते द्वीपेषु पुण्येषु च ।। 8

तुभ्यं देव नमः पितामहहरीन्द्रेभ्यः प्रशस्ताय च
ज्येष्ठायातिमनोज्ञनित्यतरुणाकाराय नित्यं नमः ।
विश्वस्मादपि पूर्वमेव वसते स्थात्रे च तस्मात्परम्
जन्मान्तादिविवर्जिताय च नमो मध्ये प्रसिद्धाय च ।। 9

लीलार्थे शवधारिणे नम इदं तुभ्यं जघन्याय च
स्थित्यन्तादिमतामशेषजगतां मूलाय तुभ्यं नमः ।
गान्धर्वे नगरे तथैव नगरेष्वन्येषु सर्वेषु च
स्थात्रेऽधीशतया प्रतीपसरणे दक्षाय तुभ्यं नमः ।। 10

प्राणिप्राणसमूहसंयमनमप्यन्ते स्वयं कुर्वते
नित्यं संवसते यमस्य च पुरे कालान्तकाद्यात्मना ।

विश्वक्षेमविधायिने नम इदं सौरात्मना चोर्वराः
स्वाविर्भावसमस्तसस्यनिवहस्यावर्धयित्रे सदा ।। 11

धान्याद्यात्मतया खलेषु वसते तुभ्यं नमः सर्वदा
लोके वाच्यतया स्थिताय सततं देवैः सह क्रीडते ।
कल्पान्तेऽप्यविनाशिने श्रुतिशिरोवेद्याय तुभ्यं नमः
स्वारण्याय च रक्षकाय च नमः शुश्रूषमाणाय च ।। 12

वर्णध्वन्युभयात्मना श्रुतिपुराणादौ प्रसिद्धाय च
प्रत्युप्तप्रतिशब्दरूपिण इदं तुभ्यं नमः शीघ्रगाम् ।
सेनां पालयतेऽति शीघ्रगरथायेदं नमस्ते नमः
शूरश्रेष्ठतमाय दुष्टनिवहान् संभिन्दते ते नमः ।। 13

वर्णश्रेष्ठ भृते विशिष्ट विलसद्देहाय तुभ्यं नमः
दिव्योपायनभस्मभाजन शिरस्त्राणादिकं बिभ्रते ।
आगुल्फस्थललम्बिकञ्चुकभृते नित्यं नमोऽस्तुश्रुति-
ख्याताय श्रुतिविश्रुतायुधभृते विख्यातसेनाय च 14

शम्भुं शत्रुभयापहं जयमहासाम्रज्यसत्पुत्रदम्
गोरीपाणिसरोरुहार्पितमहाहेमाद्रिबाणासनम् ।
बाणालङ्कृतपाणिमेणविलद्बालेन्दुगङ्गाधरं
शान्तं सुन्दररूपिणं वृषवरारूढं भजे सर्वदा ।। 15

रुद्रार्थविश्रुतपदार्थसुबोधसार-
वाक्यार्थवैभवमिदं प्रकटानुवादम् ।
पञ्चास्यश्रान्तश्रुतिविश्रुति पञ्चवाक-
वैदानुवाकमिदमेव महार्थसारम् ।। 16

देवीशाय नमोऽस्तु दुन्दुभिमहानिध्वानरूपाय च
प्रौढात्युन्नतवैभवाय वसते देवैश्च सार्धं सदा ।
भेरीवादनदण्डरूपिण इदं तुभ्यं नमः सर्वदा
दुष्टान् धर्षयते विमर्शकुशलायाशेषविद्यासु च ।। 17

नित्यं भक्तजने प्रकृष्टकरुणाशीलाय तस्मै नमो
दौत्यं कर्म च कुर्वते सुमनसां प्राणाय वह्न्यात्मने ।
भक्तेभ्यः कृपया प्रकृष्टधनदायेदं नमो बिभ्रते
खड्गं चेषुधिमुत्तमं नम इदं तीक्ष्णेषुहस्ताय च । 18

तीक्ष्णानेकशरायुधाय च नमः सौम्याय च स्वोचिता-
मोघानेकमहायुधाय शुभसत्कोदण्डहस्ताय च ।
तुभ्यं देव नमोऽस्त्वनेकविविधक्षुद्रार्थसञ्चारिणे
प्रख्याताय चरायचाचरमहालिङ्गेषु पूज्याय च ।। 19

निर्मग्नाम्भसि भूतले सदुदके देशेषु चाकर्दमे
विख्यतेषु सरस्सु विश्रुतनदीश्रेष्ठासु नादेऽपि च ।
देवाद्यर्थनिवेशितेषु निवहकूपेषु गर्तेषु च
सद्वर्षाम्भसि चापि मेघनिवहे विद्युत्सुतप्ताम्भसि ।। 20

दीप्ताभ्रे स्फुरदातपेषु च महावाते चरिष्यन्महा-
भूतव्रातयुगान्तदुःसहशिलावर्षोग्रसंवर्तके ।
ग्रीष्मे वातसमुत्थपांसुनिवहे वात्यासु वाऽन्यत्र वा
या सत्तास्ति तदात्मना जगदिदं व्याप्य स्थितायानिशम् ।।

यः सर्वाणि सदैव पाति परितो वस्तूनि वास्तोष्पति-
स्तस्मै चास्तु नमोऽस्तु सर्वभुवनव्याप्ताय सर्वात्मने ।

रुद्रं भीमकनामकेन मुनिना श्रीहेमकोशेन च
ध्यातं वश्यसुरूपवटिसुतसत्सम्पत्तिमेधायुषाम् ।। 22

विद्याऽऽरोग्यसुधेनुपट्टसुमहासाम्राज्यमोक्षश्रियां
दातारं द्विपचर्मलम्बितजटासर्पादिचिह्नं भजे ।। 23

रुद्रार्थसारपदमन्त्रपदार्थसार-
पुण्यानुवाकविशदःखलु षष्ठसप्तः(?)
विश्वाधिकप्रणतिबोधकसर्वभाव-
युक्तो हि भक्तवरमुक्तिकशक्तिदायी ।। 24

।। इति श्रीशिवरहस्ये द्वादशाम्शे
रुद्रार्थविवरणं नाम
एकोनत्रिंशोऽध्यायः ।।



## ।। त्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

लोकानुग्रहकाम्ययाऽखिलसतां ध्येयश्च यः सर्वदा
धत्ते यः शिवशम्भुशङ्करमुखानेकाभिधानानि च ।
तस्मै देव नमोऽस्तु यः करुणया प्रादुर्भवन्नग्रतो
भक्तान् पाति सहोमया प्रतिदिनं देवान् पितृन् मानवान् ।।

अन्यानप्यमृतेन तर्पयति यः सोमात्मना शङ्करः
सर्वानभ्युदयेन तर्पयति यः सोमादियागात्मना ।
पश्चाद् द्रावयति स्वयं प्रणमतां नित्यं रुजं प्राणिनां
तस्मै देव नमोऽस्तु नित्यमुदयत्काश्मीरताम्राय च ।। 2

सिन्दूरारुणमूर्तये *तदनु ते सूर्यात्मनेदं जगत्
द्युत्या द्योतयते च शं गमयते प्रापय्य भक्तं जनम् ।
सर्वाण्यालयते पशून् विधिमुखान् चोरारितापात्यय-
व्याधिभ्यः कृपयाऽवते नम इदं ते दुष्प्रधर्षाय च ।। 3

दुःखाद्यैर्यजमानमूर्तय इदं येभ्यः समस्तं जगत्
जन्मव्याधिजराविपत्तिमरणादिभ्यो बिभेतीदृशा ।
यस्माद्बिभ्यति तेऽपि ते भगवते तस्मै वियन्मूर्तये
तुभ्यं देव नमो यदा खलजनाः साधून् जिघांसन्ति ये ।। 4

आविर्भूय यदग्रतः प्रथमतस्तेषां निहन्त्रे च ये
दूरे त्वामपहाय सर्वजगदाराध्यं कुमार्गे स्थिताः ।

---

* सिन्दूरारुणमूर्तये दिनकराकाराय सर्वंजगत् इति समानार्थकः
निर्दुष्टपदबद्धश्च पाठः ।

तेषामेव दुरात्मनां चिरतरे काले निहन्त्रे नमो
हन्त्रे हन्ति बलेन येन महता हन्तव्यमाशु क्षणात् ।। 5

तद्रूपाय पशून् कृताविव महासंहारकाले बलात्-
यात्यन्तातिशयेन हन्त्यपि हरिब्रह्मेन्द्रमुख्यादरात् ।
आतार्यस्य चराचरस्य जगतस्तस्मै नमोऽस्तु प्रभो
रुद्राः पान्ति जगन्ति ये च परितो वृक्षादि रूपाः परे ।। 6

ये रुद्राहरिताभकेशनिवहास्तेभ्योऽपि नित्यं नमः
संसारार्णवमाशु तारयति यस्तारात्मकः सर्वथा ।
ब्रह्म ब्रह्मविदां चिरादुपदिशंस्तस्मै नमस्तेऽस्तु यद्
दुःखापायमयं सुखं यदि तदाभाग्यं परत्रेह च ।। 7

साक्षित्वेन तयोः शमित्यपि मयश्चेतीह विख्यातयोः
द्रष्टुं नित्यसुखात्मने नम इदं श्रीशङ्कराख्याय च ।
सर्वस्मै जगते करोति कृपया यः शंमयश्चानिशं
तस्मे तेऽस्तु नमःशिवाय च गुणातीताय शुद्धाय च ।। ८

इच्छाशक्त्यवियुक्तचिद्घनशरीरायाव्ययायात्मने
पूर्णानन्दतराय पूर्णसुखदायाजस्रपूर्णाय च ।
लोकानामविपर्ययेण कुरुतेऽत्यन्तं शिवं यः सदा
तस्मै चास्तु नमः प्रयागबदरीकेदारकाश्यादिषु ।। 9

तीर्थ्यो यो हि मरुद्वृधादिसरितां कूलं च गोदावरी-
कृष्णा सिन्धुसरस्वतीमुखसरित्पारं तदर्वाक्तटम् ।
नित्यं सन्निहिताय तेषु जगतां त्राणाय तुभ्यं नमः
प्राप्यैवोत्तमयोनिजन्मगुणमुत्कर्षक्रमात्प्राणिनाम् ।। 10

मग्नानां भवसागरे करुणया चोन्मज्जयित्रे भवा-
दूर्ध्वं चोद्धरते नमः क्रमवशात्पारं भवाम्भोनिधेः ।
प्राप्तान्कर्मवशेन जन्तुनिवहानावर्तमानान्पुनः
कर्तुं प्रेरयते धियस्तदनु तान्मध्ये भवाब्धेश्चिरम् ।। 11

सर्वान्भ्रामयते नमोऽस्तु भवते पुण्येषु दर्भादिषु
क्षुद्रप्राणिकुलेषु बालतृणवत् स्वल्पप्रामाणेषु च ।
फेन्यः फेनवदल्पकालमथवा यावत्सु जन्तुष्वपि
एवं तत्सिकतासु तद्वदधिकं क्षुद्रेषु नीरेष्वपि ।। 12

नानापुण्यनदीप्रवाहनिवहे तत्तुल्यभूतिष्वपि
श्रेष्ठप्राणिषु चेरिणेषु च तथा नित्यक्रियामानिषु ।
प्रख्याते पथि च प्रकृष्टतरसन्मार्गानुवर्तिष्वपि
क्षुद्रानेकशिलातिकर्कशतरे देशे कुशीले जने ।। 13

वस्तव्ये विजने जनेष्वति(पि) तथा योग्येषु चैतेषु यः
सर्वेष्वेवमनुग्रहाय जगतां आस्ते विभुः सर्वतः ।
तस्मै तेऽस्तु नमः कपर्दिन इदं सत्कुण्डलायानिशं
भक्तानां पुरतः स्थिताय च नमो गोष्ठे गृहाभ्यान्तरे ।। 14

तल्पेऽनल्पतरे तवातिविविधप्रासादमध्ये तथा
काटे पर्वतगह्वरे ह्रदवरे नीहारवारिष्वपि ।
सत्पांसौ विषमे रजस्यपि तथा शुष्केऽपि चार्द्रेऽपि च
देशे लुप्ततृणादिके च परितः पूर्णे तृणाद्यैः स्थले ।। 15

उर्व्यामध्यबिलाकृतिप्रतिकृतौ पर्णेषु पर्णव्रजे-
शूरेष्वस्ति शिवोऽयमेवमभितः सच्चित्सुखांशैः स्वयम् ।

भूतं भावि च वर्तमानमनु संगृह्णाति बुध्या सतां
भक्त्या भावयतां स एव सुलभस्तस्मै नमः कुर्महे ।। 16

प्रारब्धाखिलकर्मबन्धविनिवृत्त्यर्थं च पापात्मनां
आधिव्याधिजरारितस्करमहासर्पादिनक्रादिभिः ।
क्षिण्वद्भ्यो विविधं नमस्तनुभृतां कर्मानुरूपं फलं
दातुं दुष्कृतिनस्त्विमे सुकृतिनश्चेमे किलेत्यन्वहम् ।।17

लोकानुग्रहकाम्ययापि च विचिन्वद्भ्यो नमो वो नमो
मर्यादा च सुनिश्चिता च नियमेनायुः क्षयः प्राणिनाम् ।
हन्तृभ्यश्च नमः कथंञ्चिदपि सर्पेयुः क्वचित्प्राणिनः
प्रायेणेति हि शासितुं तनुभृतः सर्वान् समस्तान् सदा।।18

नीरन्ध्रं सुविजृम्भितं जगदिदं व्याप्य स्थितेभ्यो नमः
श्रीरुद्रानुचराश्च गुप्तमपरे ये सन्ति तेभ्यो नमः ।। 19

**स्कन्द उवाच -**

कन्यापुत्रसुवर्णराज्यनृपतिवश्यादि दृश्यस्त्रियः*
शत्रोर्नाशधनायुरुत्तमयशः पुत्राश्वगोऽजाविकम् ।
साम्राज्यं प्रदिशन्तमात्मनिरतं भक्त्या भजन्तं सह-
स्राक्षं श्रोत्रकराङ्घ्रिकावृतमहाविश्वेश्वरं चिन्तयेत् ।। 20

।। इति श्रीशिवरहस्ये द्वादशाम्शे
रुद्रार्थविवरणं नाम
त्रिंशोऽध्यायः ।।



---

* दृश्याङ्गना शत्रूच्छेद धनायुरुत्तमयशोरूपाश्व ............

## ।। एकत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

व्यक्ताव्यक्ततया चराचरामयं विश्वं सदान्तर्बहि-
र्व्याप्ता विश्वभवाभवस्थितिकृतो विश्वात्मका विश्वपाः ।
विश्वस्मादधिकाश्च विश्वपतयस्तन्निग्रहानुग्रह-
व्यग्रात्युग्रसुशान्तविग्रहकृतो रुद्रास्त्वदंशाश्च ये ।। 1

तद्रूपेण वयं नतिस्तुतिशतैस्त्वां प्रीणयन्तोऽधुना
सुप्रीतं वरदं कृपालुमभयं सम्प्रार्थयामः शिवम् ।
बिभ्राणः कवचं विभाति भगवान् यः पापिनां दुर्गतेः
प्रत्येदं खलु दुःखदुःसहमहासंसारदारिद्य्र(द्र्य)योः ।। 2

योऽसौ प्रापयिता समस्तभुवनं ध्वंसात्मिकाया गतेः
शश्वत्तारयिता च योऽखिलजगन्नाथोऽन्नदोऽपि स्वयम् ।
विश्वस्यैकगतिः स एव निखिलालक्ष्यस्वरूपः सदै-
वास्ते तस्य दरिद्रवज्जगदिदं यन्नामरूपात्मकम् ।। 3

सर्वस्थूलशरीरमेव यदिदं यस्य स्वहृद्देशतो
यः सम्भूय च नीललोहित इति ख्यातः शिरःपञ्चमम् ।
उद्धर्तस्य विभोर्विधातुरगजाविष्णोश्च वामंवपु-
र्यो दत्वा सविलासलोहित तनुर्निर्दोषरूपश्च यः ।। 4

कण्ठे नीलमतीवलोहितनिभं चान्यत्रगात्रं शिवं
धत्ते यः सततं दयामयतनो सत्वं प्रसन्नोऽधुना ।
एतान्पुत्रकलत्रमित्रपरिवारादीनिमान् गोमहि-
ष्यादींश्चापि पशनहन् प्रणमतां भीतान् क्रुधा मा कृथाः ।।

दुःखाद्यैश्च कदापि मा गमय तानार्तिं प्रसादात्तव
स्वामिन् किञ्चिदपि ज्वरादिकमिमान् मा बाधतां क्वापि च।
प्रध्यातं पुलहेन रुद्रमनिशं भूताभिचारादिक-
द्रोहारिष्टभयापहं धनमहासिध्यादिकं ध्यायताम् ।। 6

आगुल्फं सितकञ्चुकं डमरुकोद्युक्तोल्लसत्कुण्डलं
ध्यायेत्तुन्दिलपुत्रपुंसतिलकं सन्नूपुरं भैरवम् ।
तुङ्गोत्तुङ्गतुरङ्गसंवृतमहामातङ्गमध्यस्फुर-
द्धावत्प्रौढरथायुतावृतलसज्जाम्बूनदस्यन्दनम् ।। 7

अध्यास्तो भवतीह यः क्षितिरथे माणिक्यसिह्मासनं
ब्रह्मा जातु निजाश्रितानपि जनान्त्सम्पूजयन् मानवः (?)
इन्द्रब्रह्मपदं च सम्यमफलं साक्षाच्च मोक्षश्रियां
सालोक्यादिचतुर्विधं च भजतां तद्भोग्यसाम्यं फलम् ।।8

या ते तत्पुरुषस्य रुद्र शिवदापूर्वा तनुर्योगिनां
सर्वं यच्छति या च दक्षिणतनुः संसाररुग्भेषजी ।
प्रक्षीणाखिल कर्मभिन्न हृदय ग्रन्थिप्रणष्टाखिला-
ज्ञानं छिन्नसमस्तसंशयमपास्तद्वैतमस्तारिकम् ।। 9

ज्ञानं प्रत्यगभिन्न चिन्मयपरब्रह्मैकलक्ष्यं परं
सर्वान् बोधयतः सदा मुनिजनान् चिन्मुद्रया भद्रया ।
रुद्रस्यादिगुरोः सतां शिवमयी या स्यात्तनूरूर्ध्वगा
तस्य ज्ञानघनात्मिका तव गुणातीता शिवाख्याऽमला ।।10

नित्याऽऽत्यन्तिकबन्धमुक्तिफलदा चेशानमूर्तेः सदा
ताभिस्ते तिसृभिस्तनूभिरभितस्त्वं सज्जनैकार्थिना ।

यावन्मानुषभोगलाभजनितानन्देन दीर्घायुषं
त्वामाराधयितुं शिवं सुखय नः शम्भो दयाम्भोनिधे ।। 11

ज्ञानैश्वर्ययशोदयादिसुगुणैः सर्वैरनन्तैर्बलैः
संवृद्धः कृपया सकृत्प्रणमतामप्येकभक्त्या सताम् ।
यः संवर्धयिता य एव निखिलब्रह्माण्डविध्वंसना-
ऽऽविर्भावोद्वहनैकधृष्णु परमं धत्ते फलं केवलम् ।। 12

योऽसौ दिव्यकपर्दभृद्यमभितस्ते वीरभद्रादयो
धीराश्चाधिवसन्ति यस्य महता वीर्येण धीरोद्धताः ।
क्षीयन्ते निखिलाः खला भगवते रुद्राय तत्ते प्रियां
नित्यं तां बिभृमो वयं मितिमयीं या मानसार्चामयी ।। 13

स्वर्गोत्कृष्टफलार्थिभिर्मुनिजनैः सर्वेश्वरः सर्वथा
ध्यातव्यः शिव एव किञ्च बहुधा यष्टव्य एवानिशम् ।
स्तोतव्यः परिकीर्तनीय इति च चाविच्छेदनीया मतिः
तां लब्ध्वा शिवमेव सर्वमितरत्सन्त्यज्य सर्वात्मना ।। 14

ध्यायन्तः सततं भजाम इहनः श्रीशङ्करस्य प्रभोः
तस्यैतत्कृपया यथा स्वपरिवाराणां च किञ्चाधुना ।
ग्रामेऽस्मिन्निवसत्यशेषमपि यद्यत्प्राणिजातं च त-
त्पुष्टं तुष्टमनातुरं च सुखितं भूयात्तथोपास्महे ।। 15

स्वामिन् रुद्र नमस्क्रियाभिरनिशं स्तोत्रैर्हविर्भिःक्षय-
द्वारि त्वां वयमादरात्परिचरेमास्मासु कुर्वन् कृपाम् ।
दारापत्यधनादिभिस्तु सुखितानस्मान्कुरुष्वापि च
ब्रह्मानन्दमयं च यत्तदपि नः श्रेयः कृपाम्भोनिधे।। 16

यद्वा प्रार्थनया प्रयच्छ भगवन् त्वय्येव भक्तिं स्थिरां
वाञ्छातीतफलप्रदा भवतुनः सर्वात्मना सात्विकी ।
संसारज्वर दुःसहार्ति हरण स्वामिंस्तवानुग्रहः
पूर्णो नः किमसाध्यमस्ति भजतां तस्मात्वमस्मत्पिता ।। 17

सष्टृत्वेन नियोजितः स भगवान् लोकेश्वरः स्वस्य य-
त्प्राप्तानागतदुःसहार्तिशमनं वाञ्छन् तदाज्ञाक्रमम् ।
नातिक्रामति तच्च दुर्लभ मपि प्राप्स्यामहे तत्तथा ।। 18

देवं गोधनवद्धनं प्रणमतां हस्त्यश्वरक्षाकरम्
माण्डव्येन महर्षिणार्चितमुमाकान्तं प्रसन्नाननम् ।
चन्द्रोद्भासितशेखरं मुनिजनैः संस्तूयमानं प्रभुम्
ध्यायेद्रुद्रमभीष्टदं प्रणमतां सिह्मासनाधिष्ठितं ।। 18

स्वामिन् रुद्रमदीय वंशमखिलं वृद्धं युवानं शिशुं
गर्भस्थं पितरं स्वमातरमिहास्माकं रुषा मा वधीः ।
मा हिंसीश्च प्रिया तनूर्बहुविधा व्याध्यादि वातातपैः
शस्त्रास्त्राग्नि महाहि वृश्चिकवृक व्याघ्रोग्रसिह्मादिभिः।।20

सर्वाभीष्टफलप्रदं प्रणमतां देवं दयाशेवधिं
देवेशं हृदि देवरातमुनिना ध्यातं गणेशावृतम् ।
तं नन्दीश्वरवन्दितं सुविमलं बालेन्दुचूडामणिं
बालादित्य समानकान्तिमनिशं श्रीरुद्रमेकं भजे ।। 21

स्वामिन् रुद्र वपाहविश्चपुरोडाशाज्ययागैर्मुहुः
प्रीतिं ते नमसा च सम्प्रति वयं सम्पादयन्तोऽधिकाम् ।
देव त्वां करुणानिधिं परिचरेमास्मासु कुर्वन् कृपां
भक्तानामपराधिनामपि च मः पुत्रेषु पौत्रेषु च ।। 22

गोऽजाश्वादिषु चास्मदादिषु रुषा हिंसां विभो मा कृथाः
किञ्चास्मत्कुलवर्धनान्निहरणे दाने च धर्मे धने ।
बालांस्तन्यपरांस्तथौरसगणान् मा नो वधीः किं तु तान्
वर्धिष्णून् चिरजीविनश्च कुरु तान्नः प्रार्थनेयं विभो ।। 23

स्वात्मानं हृदि भावयन्तमनिशं रुद्रं चिरायुर्महा-
मार्गक्षेमसुतुष्टि पुत्र कनक श्रीकन्यकादिप्रदम् ।
त्वामेकादशधा विभक्तवपुषं तेजोनिधिं शूलिनं
चन्द्रालङ्कृतमौलिमिन्दुधवलं शान्ताकृतिं भावये ।। 24

आश्रान्तान् पुरुषांश्च गाश्च नितरां त्वां निघ्नतः सर्वदा
प्रीतिर्हिंसनगोचराय ........दरूपं च दूरेऽस्तुतत् (?)
विश्वत्राणपरायणस्य जगतां मास्मासु भूतस्य या
चण्डीशाद्यवनेऽस्ति सास्तु मयि सा प्रीतिः सदास्मास्विह ।।

भक्तानां शिवदं सदाशिव शिवं रूपं च यत्तच्छिवा-
यास्माकं पुरतः परिस्फुरतु ते किञ्चाधुनास्मान् विभो ।
भृत्यान् रक्ष सपक्षपातमधिकं दाक्षिण्यपूर्णं वचः
क्षेमं योगमहं वहामि भवतामित्यादराद्ब्रूहि नः ।। 26

।। इति श्रीशिवरहस्ये द्वादशाम्शे
शिवगौरीसंवादे रुद्रार्थविवरणं नाम
एकत्रिंशोऽध्यायः ।।



## ।। द्वात्रिंशोऽध्यायः ।।

श्रीरुद्रार्थक शर्म यच्छ भगवन् आमुष्मिकं चैहिकं ।
कस्तादृक्सुखवर्धनः प्रणमतां देवस्त्वदन्यः प्रभो ।। 1

आयुः श्रीसुखवर्धनं मुनिवरेणाराधितं चात्रिणा
देवोत्तंसहिरण्यसन्निभलसन्मूर्तिं प्रसन्नाननम् ।
बिभ्राणं ज्वलनं ज्वलन्तममलं कुर्वाणमग्रे स्वयं
देव्यास्ताण्डवमादरात्सुरगणैरासेव्यमानं भजे ।। 2

मार्ताण्डस्य च मण्डले त्रिभुवनव्याप्तप्रभामण्डले
नित्यं व्योम्नि परेतभूमिषु च यः प्रादुर्भवंस्तिष्ठति ।
यः सर्वश्रुतिषु श्रुतेषु निखिलश्रुत्यन्तसारेषु चा-
त्यन्तं विश्रुतदिव्यकीर्तिगुणचारित्रायुतो यः सदा ।। 3

सिह्मव्याघ्रमुखातिघोरमृगवद्भीमाकृतिर्दुर्हृदां
यो वध्यानखिलानजस्त्रमुपसंहर्तुं खलानुद्यतः ।
यश्चान्यानभिभूतशक्तिरसकृच्चोग्राकृतिं मृत्युव-
द्बिभ्रद्धन्ति खलांश्च यस्तमनिशं देवं महेशं स्तुहि ।। 4

इत्यात्मानमहं प्रमादविमुखं त्वां प्रेरयामि स्वयं
भक्त्या स्तौमि च भक्तभीतिहरणं हे रुद्र तुष्टो भव ।
स्तोतव्योऽपि सुरेश्वरैर्हरिविरिञ्चाद्यैः प्रपन्नःकिला-
ऽऽपन्नोऽयं जन इत्यनन्यशरणं मामप्यतीवाल्पकम् ।। 5

स्तोतारं सुखय प्रसादसुमुखः किञ्चास्तिकिञ्चित्परम्
भूतप्रेतपिशाचराक्षसमुखा घोरा भवत्सैनिकाः ।
मास्मांश्चैव अधिक्षिपन्तु सततं रक्षन्तु नः सर्वदा
सर्वस्माद्दुरिताद्भयाच्च भगवन् नित्यं प्रसादात्तव ।। 6

दुर्ज्ञेया विधयो विभिन्नमतिभिर्नीता अभिन्नार्थतां
छन्नछन्नविभिन्न विस्मृतमहाशाखासहस्रायुताः ।
वेदास्तद्विहितास्तथाबहुविधास्ते द्रव्यकालक्रिया-
मन्त्राः स्वल्पतरं च जीवनमतीवाल्पा च शक्तिर्मतिः ।। 7

दुर्विज्ञेयतरं सुदुष्करमतः कर्माखिलं तद्भवेत्
भक्त्या नः सफलं भवेदिति यथाप्रज्ञं यथासम्भवम् ।
यज्ञात्माऽखिलयज्ञभुक् त्वमिति च त्वां देव यक्ष्यामहे
यज्ञैरेव वपाहविश्चरुपुरोडाशाज्यवन्तो वयम् ।। 8

डम्भाहङ्कृतिदर्पपूर्णहृदया देवान्यजन्ते परान्
एतेषामधमिच्छतस्तव मुहुर्दातुं प्रदीप्ताकृते ।
उग्रा निग्रहरूपिणी स्थिरतरा या दुर्मतिर्माकृथा-
स्तामस्मासु कदाप्यतो मृति(मति)रियं हेतिश्च रुद्रस्य ते।।

भक्तान् दूरत एव देव परितः सा वर्जयत्वद्य नः
सर्वान् किञ्च विमुच्य चापमध्रुना आबद्धमस्मत्कृते ।
सृष्ट्वा विश्वमिदं महेश्वर तदेवानुप्रविश्य प्रजा-
श्चाविच्छिन्नतया समस्तजगतः स्रष्टुं स्त्रियां योनिषु (?)10

वीर्यं सिञ्चसि यत्प्रजापतिरतो मीढ्वा पिता त्वं हितः
त्वं पुत्रानिह पौत्रकांश्च सुरसश्रीरुद्रशम्भो प्रभो ।
वंशोद्धारकशक्तिभक्तिसुगुणश्रीकीर्तिमत्पुत्रदं
ध्यायंस्त्वं भगवन्तमन्तरनिशं स्वात्मानमेव स्वयम् ।। 11

नानाप्रस्फुरदायुधं नतमहापापौघदुःखापहं
देवेशं गजचर्मसंवृततनुं श्रीकृत्तिवासं (?) भजे
नाथो यः प्रकृतेः परश्च पुरुषः सर्वान्तरात्मा जपा-
लौहित्यं स्फटिकादिकेष्विव हि यः पुंभावसंभावितः ।। 12

पुम्भावः पुरुषेषु भाति जगति स्वांशप्रधानेषु यः
स्त्रीष्वेव प्रकृतिप्रधानतनुषु स्वं वीर्यमासिञ्चति ।
योऽत्यन्तं शिवदः समस्तजगतां स त्वं प्रसादार्थिनां
अस्माकं च शिवो भवाद्य सुमना हानिर्न तत्तावता ।। 13

धन्याः स्याम वयं च किं च परमे वृक्षे क्वचिद्दूरतो
निक्षप्यायुधजालमेतदखिलं पापात्मनां भीषणम् ।
सौम्यं बाहुविभूषणं करतले बिभ्रत्पिनाकं धनुः
शान्तं कान्तमुपेत्य तारकवपुः कृत्तिं वसानः शुभाम् ।।14

वैयाघ्रं वनमध्यतः करुणयाभ्यागच्छ पाहि स्वकान्
रक्षन्नः पुरतश्चराचरहितं श्रीरुद्र शम्भो प्रभो ।
अर्थप्राण विपत्ति संशयभयक्लेशारि चोर व्यथा-
भीतिघ्नं हृदि भावयन्तमनिशं शम्भुं स्वरूपं स्वयम् ।। 15

अग्र्यं यान्तमतीव सुन्दरतनुं सन्मङ्गलैकालयं
सानन्दं च पिनाकिनं वनचराकारं युवानं भजे ।
लौहित्येन विवर्जितं गिरिजया यस्याङ्गमर्धं सदा
यं वेदान्तगिरो वदन्ति सततासङ्गोह्ययं पूरुषः ।। 16

कालुष्येण विवर्जितः शिव इति ख्यातश्च यः पूजितः
सद्भिः सद्विविधामयार्तिभयहृत्संसारघोरापदाम् ।
यस्त्वं खण्डयितासि काण्डनिवहान् चण्डान् प्रकीर्याभितः
दण्ड्यान् दण्डयसि स्वयं च हरसि स्वैर्भीषणैरायुधैः ।।17

ज्ञानैश्वर्ययशः सुवीर्यकरुणावैराग्यभाग्यामित-
श्रीभिः पूर्णतरोऽस्ति यो हि भगवानस्मै नमस्तेऽधुना ।
यास्ते सन्तु सहस्रमाशुगतयस्ता हेतयो यायिनः
शास्तुं किञ्चिदधिक्षिपन्त्वघवतां मद्ये मदन्यं तथा ।। 18

भक्ता एव वयं भवाम भवतः सर्वात्मना सागराः
त्वद्ध्यानैकपरायणाः सुमनसो नित्यं समाशास्महे ।
तिर्यग्जन्तु महाजलूकजनतापक्ष्यादि सिद्धिप्रदं
देवं सर्वजयप्रदं च भजतां शम्भुं पुलस्त्यार्चितम् ।। 19

सस्कन्दं जगदम्बयायुततनुं देवादिरुद्रैः स्तुतं
साम्बं क्लृप्तविवाहमङ्गलविधिं स्मेराननं भावये ।
प्रत्येकं च सहस्रधा बहुसहस्राणां सहस्राणि यः
सन्त्यत्युत्तमहेतयस्तव शिवासङ्ख्येयबाहुष्विह ।। 20

तत्सङ्क्षेपणतत्समुद्भवमहाहिंसाविधानादिके-
ष्वीशानो भगवन् विभासि यदि तच्चित्रं किमत्र प्रभो ।
पुण्यापुण्यकृतां परस्परमपि संज्ञानलक्ष्यं क्षणात्
लक्षीकृत्य तु पुण्यपापवशतस्तन्निग्रहानुग्रहे ।। 21

हर्तुं भर्तुमशेषलोकमपि यस्त्वं भाविकीमीशतां
धत्सेऽतः करुणावशाच्छरणगांस्त्रातुं सदाऽस्मान् प्रति ।
हेतीनां तु मुखानि चानभिमुखान्यस्माकमस्मद्द्विषां
नित्यं चाभिमुखानि देव कुरु नः सौख्यप्रदानि प्रभो ।।22

देवोपद्रवराजपीडनमहाकान्तारचोरव्यथा-
भीतिघ्नं हृदि नारदेन मुनिना ध्यातं सतां सर्वदा ।
रुद्रं सर्वमनोज्ञभूषणधरं सर्वायुधालङ्कृतं
सर्वाघौघहरं च सर्वजगतामीशं महेशं भजे ।। 23

कल्पादौ विधिनाऽर्थितेन कृपया रुद्रेण ये निर्मिता-
स्तुत्तुल्याकृतयस्तदायुधधरास्ततुल्यभूषास्तथा ।
लोकानुग्रहनिग्रहैकनिपुणाः कर्मानुरूपं फलं
यच्छन्तो निवसन्ति ये च परितः सूर्यानिलाग्न्यंशजाः ।।24

विश्वेदेवगणाः प्रसिद्धसुगुणास्तेजोमरुत्पार्थिवा-
श्चारा ये च महेश्वरस्य बहुधा नित्यं विभक्ताकृतेः ।
भक्तानुग्रहतत्परस्य बहवः सानुग्रहानिग्रहा
ये भक्ताः शिवभावनामधिगता रुद्राः सुरूपा हि ते ।। 25

वैयाघ्राजिनभोगिभूषणभृतो बालेन्दुगङ्गाजटा-
चूडालङ्कृतमस्तकास्त्रिणयनाःसाम्बाः स नन्दीश्वराः ।
ये देवानुचराश्च देवसदृशो देवा गणाधीश्वराः
सर्वेऽमी भजतां शिवात्मकतया संसाररुग्द्रावकाः ।। 26

प्रत्येकं तु सहस्रशो बहुसहस्राणां सहस्राणि ये
रुद्राश्चाधिवसन्त्यधीश्वर तथा भूम्यन्तरिक्षे दिवि ।
ये सर्वत्रभवा भवेन सदृशा अस्मिन्महत्यर्णवे
वृष्टिर्नः परिपूर्णमेघनिवहैः पूर्णेऽन्तरिक्षेऽपि च ।। 27

ये हालाहलनीलकण्ठ वपुषः शर्वाः क्षमायामधः
पाताले प्रचरन्ति येऽपि च दिवि रुद्राः सदोपाश्रिताः ।
तानेवं स्तुभिः सदैव नतिभिश्चाराधयन्तो वयं
तेषामद्य सहस्रयोजनमिते दूरे स्थितानामपि ।। 28

अर्वाक्तत्परतः पुरश्च परितः सज्जानि धन्वान्यलं
विज्यान्यातनुमः सुखाय सततं क्षेमाय योगाय च ।
राज्ञां शत्रुविनाशनं प्रणमतां घोराभिचारक्रिया-
सम्भूताधनिवारणं च मुनिना दुर्वाससाराधितम् ।। 29

बिभ्राणं त्रिशिखं प्रदीप्तवपुषं रुद्रं ज्वलन्मूर्धजं
भोगीन्द्राभरणं भजे भयहरं दंष्ट्राकरालाननम् ।। 30

अयमनुवाकचतुष्टयस्य रुद्र-
    प्रिययोगस्य उपासनाविशेषः ।
अथवा चाष्टतनोस्तथाष्टहृष्टो
    नवमोऽयं दशमः शतान्वितानाम् ।। 31

स्कन्द उवाच -

अकर्तुं कर्तुं वा भुवनमखिलं ये किल भव-
न्त्यलं ते पादान्ते पुरहरवरं ते सुखवराः ।
कुटीरं कोटीरं त्वमहह कुलीराय कृतवान्
भवान् विश्वस्येष्टे तव पुनरभीष्टा हि करुणा ।। 32

श्रीकान्ताद्यास्त्रिदशतिलकाः श्रीमतीमर्थयन्ते
यां ते दृष्टिं स्पृहयति जनः सैव तस्यै किलास्यै ।
अत्यावृत्त्या गिरियमये नाथ तेषामतेषा-
अप्याप्तस्ते समुचितमुमाकान्त मन्तुं न मन्तुम् ।। 33

।। इति श्रीशिवरहस्ये द्वादशाम्शे शिवगौरी संवादे
रुद्रार्थविवरणे स्कन्दजैगीषसंवादे महेतिहासे
द्वात्रिंशोऽध्यायः ।।



## ।। त्रयस्त्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

ये वृक्षेष्विह कालकर्मवशतश्चावृश्च्यमानेष्विमां
क्ष्मामावृत्य चराचरात्मरतया तिष्ठन्ति जावेषु ये (?)
अन्तव्याप्तजगन्ति येऽखिलजगत्पीडाकराणां सदा(?)
हन्तारोऽसितकन्धरा बहुविधा ये नित्यनिष्कल्मषाः ।। 1

भूतानां पृथिवीजलाग्निमरुदाकाशात्मनां ये धिया
स्थित्वा तेषु जगन्ति पान्ति परितस्तत्कार्यभूतैः फलैः ।
नानाभूतगणाधिपाश्च विविधा ज्वालाज्वलन्मूर्तयः
ये वा वीतशिखा विचित्रविशिखा ये वा कपर्दोज्ज्वलाः ।। 2

येऽन्नेषु चतुर्विधेषु च तदा ये ये पुरान्नादना
व्यापारार्हविचित्ररूपचषका मार्गादिके संस्थिताः ।
पापिष्ठान् फलतोलनेन विविधं पापानुरूपं जनान्
न्यूनाधिक्यविचित्रधातुगतिभिर्विध्यन्ति च व्याधिभिः ।। 3

तेषामद्य सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ।
राज्ञां शत्रुनृपादिमारणमहासिद्धिप्रदं तादृशां
भक्तानामखिलाघसङ्घहरणं श्रीदेवलाराधितम् ।। 4

रुद्रं भीषणभोगिभूषणधरं दंष्ट्राकरालाननं
बिभ्राणं त्रिशिखं प्रदीप्तवपुषं ध्यायेज्ज्वलन्मूर्धजम् ।
येऽमी लौकिकवैदिकादिविधया नानाविधानां पथां
सर्वेषामपि रक्षका बहुविधाः कर्मानुरूपेण ये ।। 5

ये धर्मं च तथोऽथ देव पथिभिश्चोर्ध्वं च तिर्यग्गति-
श्चाधस्ताच्च नयन्ति ये सुकृतिनां भक्त्या परं ध्यायताम् ।
कर्तृत्वादिमतिप्रसक्तविविधव्यापारशूरस्थिर-
ध्यानापास्तसमस्तकल्मषमनः साक्षात्कृतब्रह्मणाम् ।। 6

ईशन्यस्तसमस्तदुर्भरमहासंसारभारात्मनां
अन्नं दातुमरं त्वलं करुणया हस्ते दधानाः सदा
ये युध्वा युवभिः खलैरतिबलैः सम्पीड्यमानान् सदा
संरक्षन्ति हरन्ति कर्मवशतश्चायुः परेषामपि ।। 7

ये तीर्थानि चरन्ति तीर्थफलदास्तीर्थद्विषःसन्ततं
हन्तुं बाणकृपाणकार्मुकसृकावन्तो निषङ्गोद्यताः ।
तेषामद्य सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ।। 8

विद्वद्वल्लभसर्वशक्तवरसत्पुत्रप्रदं ध्यायतां
सौमुख्येन समस्ततीर्थफलदं श्रीदेवलाराधितम् ।
रुद्रं भीषणभोगिभूषणधरं दंष्ट्राकरालाननं
बिभ्राणं त्रिशिखं प्रदीप्तवपुषं ध्यायेज्ज्वलन्मूर्धजम् ।। 9

एतावद्भिरिहोदितैर्दशमहामन्त्रैः प्रकाशीकृता-
श्चैतावद्भिरियत्तयाऽपरिमिता भूम्यन्तरिक्षे स्थिताः ।
ये त्रैलोक्यमतीत्य सर्वभुवनव्याप्ताश्च सर्वात्मकाः
भूयांसश्च वसन्ति ये दशदिशो रुद्राः समाक्रम्य च ।। 10

तेषामेव सहस्रयोजनमिते दूरे स्थितानां वयं
विज्यान्यातनुमो धनूंषि सततं क्षेमाय योगाय च ।

विद्यापुत्रपुराङ्गनाप्तिसुमहामातङ्गतुङ्गाश्वदं
दिव्यस्यन्दनदिव्यसस्यसुमहीभोगादिहेमार्थदम् ।। 11

रुद्रं भस्मविभूषणं फणिगणाभूषं ज्वलत्कन्धरं
चन्द्रोद्भासिशिखं प्रदीप्तवपुषं ध्यायेत् त्रिशूलीकरम् ।
श्रीरुद्रेभ्य इदं नमः प्रथमतो वा चैव वाग्भूतये
कर्मण्यप्यथ ये वसन्ति च पृथक् भूम्यन्तरिक्षाद्द्वयुः ।। 12

दत्वान्नं बहुभक्षणादिषु रतास्त्वां कार्यशौर्यादिभिः (?)
पापिष्ठा गदबन्धनादिजनितक्लेशाकुलान् कुर्वताम् ।
अल्पाल्पैरधिकाधिकैर्मुहुरकालोत्थैर्मरुद्वर्षणैः
येषां पीडयतां जगत्यधिकृतां अन्नं च वासस्तथा ।। 13

वर्षन्त्येषु समूहवत्त्रि(त्त्रि)णयमप्येतज्जगज्जीवनं (?)
हिंसासाधनमास दुष्कृतकृतां क्षेमाय नित्यं समाम् ।
तेभ्यो नः पुरतो वयं त्विह दश प्राचीःप्रतीचीर्दिशो-
र्ध्वारोग्याय शिवाय कायिकनमस्कारात्मिकाः सर्वतः ।।14

कृत्वा चिन्तितसिद्धयेऽथ मनसा तेभ्यो नमस्कुर्महे
हे रुद्राः सुखयन्तु नः प्रणमतस्तेऽमी भजन्तो वयम् ।
निष्पापाः स्तुतिपूर्णकानतिशतैर्युष्मत्कृपाभाजनाः
तस्मादस्मदरिं तु पापपुरुषं हेतुं स यत्नाच्चिरात् ।। 15

यं द्विष्मः परिपीडयन्ननुदिनं दारिद्र्यरोगादिभिः
योऽस्मान् द्वेष्टि तमेव दन्तनिवहैः कालात्मनावा दधा-
म्येतांस्तान् सुखितान् सदा कुरु जनान्पूर्णान्सदा रक्ष नः ।।

कालज्ञानदमन्नदं प्रणमतां जातिस्मरत्वप्रदं
सर्वाभीष्टदमात्मनात्मनि निजात्मानं भजन्तं सदा ।
रुद्रं देवमनन्तरुद्रसहितं विश्वेश्वरं विश्वत-
श्चक्षुः श्रोत्रकराङ्घ्रिमूर्जितमहाकालत्मकं चिन्तये ।। 17

**स्कन्द उवाच -**

कस्तं व्यस्तसमस्तरूपमिह सुस्तोतुं समस्तात्मकं
सामर्थ्येन समस्ततां न भजते ह्यन्यस्य का वा कथा ।
जल्पन्तं किमपि स्तनन्धयमिव प्रीत्यार्भकं तावकं
भक्तं मामव मे त्वमेव हि पिता माता च दाता तथा ।। 18

**ईश्वर उवाच -**

त्वं रुद्रार्थवचोभिरुग्रतपसा स्तोतार्थपारीणवान्
ओङ्कारप्रवणः प्रवीणमननो ज्ञाता स्वयं पावनः ।
नेदृक्संस्तवमर्थवद् हृदि सदा रुद्रार्थधृक् कोऽपि वा
ध्यानेनाधिगतं ममैव कृपया या ते प्रसूः पार्वति ।। 19

यस्याः स्तन्यरसामृतं प्रपिबतो विज्ञानवारांनिधिः
भक्त्याख्यानिललोल चञ्चलशिवज्ञानोर्मयो जृम्भिताः ।
तेषां शीकरशीतसारसुमनःसौरभ्यभावं गणा
देवा भूसुरसत्तमाश्च नियतं प्राप्ताः शिवज्ञानजम् ।। 20

धन्यस्त्वं जगदेकपावनकरीं विश्राणयन् मे कथां
जैगीषव्यमुखेषु शाम्भत मुनिष्वेवं प्रसन्नात्मना ।
संसारामयभेषजं मम महारुद्रस्तवं केवलं
मत्प्रीत्यै भवता समीरितमिदं भूयात्तव श्रेयसे ।। 21

एवं ध्यानजपानुबोधनपदव्याख्यानवित्पावनः
पूजा संयमनप्रवीणमननो यो वा भवेदात्मनः ।
कामानाशु लभेत भूतिविलसद्गात्रस्त्रिपुण्ड्रोल्लस-
द्रुद्राक्षामलहारकण्ठवलयो भूमा त्रिणेत्रप्रियः ।। 22

निष्कामो यदि रुद्रजाप्यपरमो मुक्तिं लभेत्सक्तधीः
ध्यानाकारविशेषमन्त्रपदवित्काम्यं सहस्रोत्तरम् ।
जप्त्वा होमदशांश तर्पणविधिं कृत्वा च शैवार्चनम्
भूत्वा कृच्छ्रतपोविपावित तनुस्तां तां लभेत्कामनाम् ।। 23

जप्त्वा पश्चिमवक्त्रलिङ्गमभितो ध्यायन्नुदग्वकत्रवान्
बालेन्दुद्युतिकोटिसन्निभमुमाकान्तं सदा शान्तधीः ।
पापौघप्रशमाय भस्मवरधृक् मुक्तोऽविमुक्तिं गतः
तत्रैवामरणं वसन्नपि नरो मुक्तिं लभेतापराम् ।। 24

यस्त्वेकवारं शतरुद्रजापी
पापैर्महद्भिः प्रविमुक्त एव ।
द्विवारमप्येतदिहात्र सम्पठन्
गणोत्तमः सम्भविताऽचिराय ।। 25

त्रिवाररुद्रं प्रजपन्नघघ्नं
मय्येव लीनः स भवेद्विमुक्तः ।
भक्तोऽविमुक्तिं समवाप्य मोदते
प्रीतिर्भवेद्राजतगोत्रराजनि ।। 26

नक्तंदिवं वा प्रजपन् हि भक्तो
मुक्तः स शक्तः स विमुक्तपापः ।

सक्तोऽपि संसारवरोरुपाशै-
व्यक्तं स मुक्तो मम स प्रसादभाक् ।। 27

श्रीरुद्रमन्त्रान् प्रविहाय मूढः
पञ्चाक्षरीमध्यगतान् विमुक्त्यै ।
यतेत यः संसृतिपाशबद्ध-
स्त्यक्त्वैव गां सोऽनडुहं दुहेद्यथा ।। 28

यो भासुरो भूसुर जन्मवांस्यात्
तेनैव भस्माक्षधरेण जाप्यः ।
न चार्थलाभेन न चान्यचेतसा
जप्यः किलायं श्रुतिरत्नकोशः ।। 29

**स्कन्द उवाच-**

इत्युक्तं शिववचनं निशम्य विप्राः
तुष्टोऽहं शिपिविष्टमष्टमूर्तिम् ।
जुष्टस्तत्पदकमले हृदीष्टलिङ्गं
संवेश्य प्रणतिमनाः प्रतुष्टवान् हि ।। 30

वन्दे तं जयदमपूर्व नव्य भव्य-
स्तव्येन प्रमथपतिं च दिव्यवाग्भिः ।
गव्येन प्लुतसर्पिषा यथेह भव्य-
हव्येन प्रकटशिखोऽथ हव्यवाहः ।। 31

।। इति श्रीशिवरहस्ये द्वादशाम्शे स्कन्दकृतरुद्रार्थविवरणं नाम त्रयस्त्रिंशोऽध्यायः ।।



## ।। चतुस्त्रिंशोऽध्यायः ।।

**जैगीषव्य उवाच -**

सुब्रह्मण्य वदास्मभ्यं जय स्तोत्रं जयावहम् ।
विश्वाधिकस्य देवस्य महादेवस्य वेधसः ।। 1

श्रवणेऽवहिताः सर्वे गणा मुनिगणाः सुराः ।
येन स्तवेन स्तुवतां सुप्रीतः स्यान्महेश्वरः ।। 2

**सूत उवाच -**

जैगीषव्यवचः श्रुत्वा नत्वा स्कन्दो महेश्वरम् ।
कृताञ्जलिपुटो भूत्वा जयस्तोत्रमुदैरयत् ।। 3

**सुब्रह्मण्य उवाच -**

जय कैलासनिलय जय शैलात्मजापते ।
जय मन्दाकिनीभूष जय वृन्दारकर्चित ।। 4

जय कामाङ्गदहन जय वामाङ्गशैलज ।
जय सोमकलामौले जय भ्रूमध्यलोचन ।। 5

जय रुद्र महादेव जय भद्रवरासन ।
जय नागेन्द्रकेयूर जय योगीन्द्रसेवित ।। 6

जय गङ्गाधरेशान जय भोगापवर्गद ।
जय रागादिदोषघ्न जय नागाननप्रिय ।। 7

जय विश्वप्रकाशात्मन् जय विश्वविधायक ।
जय विश्वाधिप स्वामिन् जय विश्वाधिकप्रभो ।। 8

जय दिव्यपटीराङ्ग जय हव्यप्रियाव्यय ।
जय शम्भो वृषारूढ जय कुम्भोद्भवस्तुत ।। 9

जय शक्तित्रयाराध्य जय मुक्तिसुखप्रद ।
जय भक्तपराधीन जय मुक्तजनेडित ।। 10

जय प्रणतमन्दार जय प्रणवविग्रह ।
जय बद्धजटाजूट जय सिद्धवराकृते ।। 11

जय पुष्करपत्राक्ष जय पुष्करमूर्धज ।
जय दुष्कर्मनिर्मूल जय निष्कल्मषव्रज ।। 12

जय वित्तेशवरद जय मत्तेन्द्रसूदन ।
जय कोट्यर्कसङ्काश जय नाट्यविशारद ।। 13

जय कल्पितविध्यण्ड जय कल्पान्त भैरव ।
जय तेजोमयाकार जय वाजीकृतानन ।। 14

जय क्षोणीरथारूढ जय वाणीशसारथे ।
जय पर्वतकोदण्ड जय मौर्वीकृतोरग ।। 15

जयार्केन्दुहुताशाक्ष जय सेवकवर्धन ।
जय त्रिपुण्ड्रनिटिल जय त्रिपुरशासन ।। 16

जय पञ्चाक्षरीरूप जय पञ्चाननोज्ज्वल ।
जय पञ्चत्वरहित जय पञ्चदशाम्बक ।। 17

जय पार्श्वस्थितस्कन्द जय शाश्वतवैभव ।
जय वेदशिरोवेद्य जय नादपरायण ।। 18

जय श्रीदक्षिणामूर्ते जय श्रीद महेश्वर ।
जयापस्मार न्यस्ताङ्घ्रे जय विस्मय विक्रम ।। 19

जय वीरासनासीन जयघोरनिवारण ।
जय पुष्कर हस्ताब्ज जय ध्वस्तजलन्धर ।। 20

जय निस्तुललावण्य जय वास्तु सुपूजित ।
जयरुद्राक्षमालाढ्य जय मुद्रोज्ज्वलत्कर ।। 21

जय क्षुद्रधनध्वंसिन् जय रुद्रगणार्चित ।
जय शौरिकृतस्तोत्र जय दूरीकृतामय ।। 22

जय केशववन्द्याङ्घ्रे जय देशिकपुङ्गव ।
जय मायादिरहित जय ध्येयावनीसुर(?) ।। 23

जय वन्दितदेवौघ जय नन्दिमुखस्तुत ।
जय बोधितविज्ञान जय मोदिततापस ।। 24

जय भेदितसंसार जयानन्तगुणाकर ।
जयान्तकवधोद्युक्त जयान्धकविनाशन ।। 25

जय वाङ्मनसागम्य जय वाचस्पतीडित ।
जय सद्भस्मलिप्ताङ्ग जय सद्भक्तवत्सल ।। 26

जय दारिद्र्यमूलघ्न जय दारितदुर्जन ।
जय धर्मादिफलद जय निर्माय सौख्यद ।। 27

जय चण्डेशवरद जय दण्डपराक्रम ।
जय भृङ्गिमनोवास जय सङ्गीतपण्डित ।। 28

जय वर्णितचारित्र जय वर्णाश्रमोचित ।
जय साम्ब दयासिन्धो जय जाम्बूनदाम्बर ।। 29

जय कंसघ्न दुर्दर्श जय हंसस्थदुर्लभ ।
जय भीमाङ्ग शरभ जय सामाङ्गपारग ।। 30

जय कैरातशारीर जय वैराग्यसिद्धिद ।
जय दावानलाकार जय देवारिमर्दन ।। 31

जय कालीकृकोल्लास जय केलीविलासग ।
जय दक्षमखच्छेद जय नक्षत्रहारक ।। 32

जय पूषरदध्वंसिन् जय भेषजसत्त्म ।
जय काशसुमाकार जयाकाशविहारक ।। 33

जय शुद्धान्तरङ्गस्थ जय मध्यान्तवर्जित ।
जय प्रमथयूथेश जय श्रमविनाशन ।। 34

जय प्रधानपुरुष जयाजास्यनिकृन्तन ।
जय मौनव्रतपर जय दीनजनावन ।। 35

जय देवर्षिसंस्तव्य जय देवशिखामणे ।
जय नारदगानेड्य जय शीतांशुशेखर ।। 36

जय दारुवनान्तःस्थ जय चारुकलेबर ।
जय भिक्षाटनरत जय यक्षाधिपार्चित । 37

जय वीतरिपुस्तोम जय भूतपते मृड ।
जय सर्वोत्तमस्थान जय सर्वोपकारक ।। 38

जय श्रीकण्ठ भगवन् जय वैकुम्टचक्रद ।
जय हृत्पद्ममध्यस्थ जय सत्पदसंस्थित ।। 39

जय मन्दरशैलस्थ जय सुन्दर साम्बिक ।
जय मेरुशिरोवास जय हारीकृतोरग ।। 40

जयरामकृतापदघ्न(?)जय हेमसभापते .
जय स्थाणो पशुपते जय वीणालसत्कर ।। 41

जय व्याघ्राजिनधर जय व्याघ्राङ्घ्रिसेवित ।
जय सप्तर्षिविनुत जय दीप्तशिरोरुह ।। 42

जय विप्रवराकार जय क्षिप्रवरप्रद ।
जय कर्मादिदूरस्थ जय धर्मभृतां वर ।। 43

जय सुगुणसन्दोह जय निर्गुणवल्लभ ।
जय वामाङ्गरहित जय भामाङ्गदायक ।। 44

जय क्षयकराजाण्ड जय ध्येय महामते ।
जय जन्म जराहीन जय सन्मानसस्थित ।। 45

जय त्रिलिङ्गहीनाङ्ग जय श्रीलिङ्गपूजित ।
जय टङ्कगदाहस्त जय शङ्कर धूर्जटे ।। 46

जय लिङ्गशरीरघ्न जय संसर्गकोविद ।
जय तापत्रयच्छेद जय रूपत्रयात्मक ।। 47

जय दातृत्वनिपुण जय मातृकयादृत ।।
जय मन्दारसद्भूष जय वन्दारुनन्दित ।। 48

जय वाणीकृतस्तोत्र जय माणिक्यकुण्डल ।
जय पद्मार्चितपद जय पद्मारुण प्रभ ।। 49

जय हंसाग्र सुखद जय संसारतारक ।
जय कल्याणपुरुष जय कल्याणसन्तत ।। 50

जय कन्दलितानन्द जय कुन्दरदद्युते ।
जय मन्दस्मितमुख जय चन्दनशीतल ।। 51

जय विज्ञानवाराशे जय प्रज्ञानकल्पक ।
जय त्रिकाल कालात्मन् जय कालत्रयातिग ।। 52

जय शर्व भवेशान जय सर्वज्ञ कामद ।
जय भर्ग महाबाहो जय दुर्गार्तिनाशन ।। 53

जय कल्याणगिरिश जय संहारकारण ।
जय गोक्षीरवर्णाङ्ग जय साक्षिजगत्त्रय(?) ।। 54

जय नित्यादिकलित जयामरवरार्चित ।
जय रौराद्रिदम्भोले जय भागीकृताच्युत ।। 55

जयाग्रेसर विध्वंसिन् जय ग्राहविनाशक ।
जय शान्तासुरध्वंसिन् जय कान्तारमध्यग ।। 56

जय दण्डासुरहर जय मुण्डासुरान्तक ।
जयेष्टिकासुरहर जयेष्टिफलदायक ।। 57

जय क्षेमङ्कर शिव जय हेमाङ्गदोज्ज्वल ।
जय देव विराड्रूप जय कैवल्यवल्लभ ।। 58

जय देहात्ममोहघ्न जय मोहनविग्रह ।
जय क्षराक्षरातीत जय घोरार्तिखण्डन ।। 59

जय रत्नगृहावास जय रत्नमयासन ।
जय दौर्भाग्यतूलाग्ने जय गर्भधृताखिल ।। 60

जय सञ्चितदोषघ्न जय काञ्चनदेहक ।
जय विद्रुमतुल्याङ्घ्रे जय कद्रुसुखार्चित ।। 61

जय चण्डप्रचण्डेश जय दण्डधनुर्धर ।
जय क्रूराभिचारघ्न जय दारसुतान्वित ।। 62

जय जीमूतसुखद जय भूमूलमन्दिर ।
जय खण्डितपाषण्ड जय चण्डगणान्वित ।। 63

जय प्रशान्तमहिमन् जय कोशोत्तरस्थित ।
जय सर्वमनुध्येय जय सर्ववशीकृत ।। 64

जय पूर्णदयादृष्टे जय मार्कण्डरक्षक ।
जयाथ मन्युसुप्रीत जय सत्पद्मभास्कर ।। 65

जय प्रपञ्चनिर्मातर्जय सर्व विधायक ।
जय स्वतेजसाभास जय लोकैकपालक ।। 66

जयाग्नीन्दुजलादित्यव्योमानिलमहीमय ।
जय प्रकृतिमुख्येश जय त्रिगुणकल्पक ।। 67

जय निर्व्याजकरुण जय विद्याधिनायक ।
जयापारकृपासिन्धो जयाचिन्त्यगुणोदय ।। 68

जय शौर्यमहाधैर्य जय धर्मैककारण ।
जय ब्रह्मादिकीटान्त व्याप्तस्वच्छन्दविग्रह ।। 69

*जय भाषापतिश्रीश जय वर्णितवैभव (?)
जय प्रलयसञ्जात जय कालाग्निरुद्रक ।। 70

जय सङ्कल्पनामात्रविनिर्मितजगत्त्रय ।
जय श्रीशविधीन्द्राद्य जय सर्वनियोजक ।। 71

जय हीनसमाधिक्य जय वार्धक्यवर्जित ।
जय नीलोत्पलश्याम जय वर्णविराजित ।। 72

जय कर्पूरधवल जय चारुशुभाकृते ।
जय ध्वजाङ्कुशाभोग जय चक्रलसत्पद ।। 73

जय सौवर्णवसन जय राजत्कटीतट ।
जय पीनोरुजघन जयराजितविश्वप ।। 74

जय मुक्ताफलीहार जय वज्राङ्गदोज्ज्वल ।
जय दीघचतुर्बाहो जय कङ्कणमण्डित ।। 75

जयाऽभीतिवरोपेत जय बाहुद्वयान्वित ।
जय ज्वलन्महानील जय भूषितसद्गल ।। 76

जय सुन्दर सस्मेर जय वक्त्रविराजित ।
जय कुण्डलविभ्राज जय कुण्डलिकुण्डल ।। 77

---

* एतादृश सङ्ख्यातीतशब्दप्रयोगा अस्मिन् इतिहासरले दृश्यन्ते ।

जय चाम्पेयनासाग्र जय बिम्बाधरोज्ज्वल ।
जय पावकचन्द्रार्क जय लोचनभूषित ।। 78

जय कोकनदोद्भास(सि) जय कोटीर शोभित ।
जयाऽपारामितानन्द जय सुन्दर विग्रह ।। 79

जय स्कन्दगणाधीश जय भद्रादिसेवित ।
जयानेकमहाचित्र जय शक्तिगणावृत ।। 80

जय निस्तुल विज्ञान जयानन्दमहोदधे ।
जयाविद्यान्धकारार्क जय श्रीमन्महेश्वर ।। 81

जय कूटस्थ परम जय शूलायुधावृत ।
जयाप्रतर्क्यविभव जय सन्ततमङ्गल ।। 82

जय नित्यमहाभाग जय लिङ्गार्चनप्रिय ।
जय ज्वरादिरोगघ्न जय श्रीरुद्रमध्यग ।। 83

जय मार्ताण्डमध्यमस्थ जय पावकमध्यग ।
जय चन्द्रान्तनिलय जय बिन्दुकलात्मक ।। 84

जय श्रीचक्रसंस्थान जय भूचक्रपीठभूः ।
जय नादकलातीत जय वादिविभेदन ।। 85

जय तत्पूर्षमन्त्रार्थ जयाऽघोरास्त्रनायक ।
जयेशान विरूपाक्ष जयवामादिसद्यक ।। 86

जय शुक्रकृतस्तोत्र जय निर्मत्सरार्चित ।
जय कल्पद्रुमस्थान जय खट्वाङ्गराजित ।। 87

---

* अहो निरङ्कुशता इतिहासरत्नविरचयितुः शब्दप्रयोगविषये !!!

जयावसाननिर्मुक्त जय बिल्वार्चनप्रिय ।
जयाष्टमूर्ते सर्वात्मन् जयाचारविवर्धन ।। 88

जयापचारशमन जयापद्बान्धव प्रभो ।
जयोपचार सन्दोह जय पाशविमोचन ।। 89

जय तस्करमूर्धन्य जय मस्करिरूपग ।
जय कङ्कालरूपात्मन् जय शङ्कातिदूरग ।। 90

जय शापास्त्रदमन जय मार्ताण्डभैरव ।
जय पञ्चासनासीन जय वञ्चकदुर्लभ ।। 91

जय दुर्भगसंहार जय सद्भावभावित ।
जय सर्वग सर्वेश जय सर्वशुभास्पद ।। 92

जय विष्ण्वादिजनक जय प्रमथनायक ।
जय सोमाग्निविशिख जय सर्वमरुत्सख ।। 93

जय कर्पूरदिव्याङ्ग जय सर्वान्तरङ्गग ।
जय पालितभक्तौघ जयाभक्तविदूरग ।। 94

जय कल्पितवैरिञ्च जय वञ्चितवञ्चक ।
जय गङ्गाजटाजूट जय सन्ध्यामहानट ।। 95

जय वर्णितवैकुण्ठ जय मानितकर्मठ ।
जय चन्द्रमहाचूड जय भर्ग विभो मृड ।। 96

जय हृत्पङ्कजारूढ जय विश्वार्तिहन् दृढ ।
जय दुःखार्तिहरण जय भोगिविभूषण ।। 97

जय बिल्वार्चनप्रीत जयामितसुखप्रद ।
जय मन्नाथ सन्नाथ जय दारितमन्मथ ।। 98

जया शैलात्मजार्धाङ्ग जय भक्तानुरञ्जन ।
जय देवारिविजय जय प्रीतधनाधिप ।। 99

जय कान्तारनिलय जय सर्वजगन्मय ।
जय नागेन्द्रसद्धार जय दीप्यत्कलेबर ।। 100

जय नीलालकालोल जय दीनैकवत्सल ।
जय विख्यातविभव जय सुप्रीतसंस्तव ।। 101

जय सर्वज्ञ सर्वेश जय शौर्यैकवासभूः ।
जय रत्नमहाभूष जय धारितदुर्विष ।। 102

जयाम्बरितदिग्जाल जय प्रख्यातसाहस ।
जय सद्वाहनारूढ जय स्वीकृतविग्रह ।। 103

जय कण्ठमहाक्ष्वेल जय श्रीकृष्णपिङ्गल ।
जय सर्वसुराध्यक्ष जय विश्वाधिनायक ।। 104

**स्कन्द उवाच -**

इत्येवं मदनारातेः स्तोत्रं यस्तु पठेन्नरः ।
विमुच्यते जन्मबन्धैः प्राप्नुयाद्भोगमुत्तमम् ।। 105

जयस्तोत्रमिदं पुण्यं पूजान्ते कीर्तनीयकम् ।
शिवस्य सन्निधौ जप्त्वा शिवलोकं स गच्छति ।। 106

जय विश्वविधान दक्षशिक्ष(जय जय)
जय जय कारण कारणेन्दुमौले ।

जय जय सर्वसुरानुरागसिन्धो
जय जय भक्तजनावनैकबन्धो ।। 107

जय जय पुण्यविचित्र चारुकीर्ते
जय जय भक्तकदम्बदारितार्ते ।
जय जय निगमान्त घोषिताऽऽद्य
जय जय संसृतिरुग्विनाशवैद्य ।। 108

जय जय सर्वसुरोरुसर्वनाथ
जय जय पर्वतेन्दजासनाथ ।
जय जय चारुशशाङ्कशोभिमौले
जय जय पापगिरीन्द्रपक्षवज्र ।। 109

जय जय कालभुजङ्गनाशशील
जय जय कुण्डलकुण्डलीशमाल
जय भस्मविभूषणाङ्गसङ्ग
जय जय भक्तहृदब्जपापभङ्ग ।। 110

जय जय कृत्तिवसान विश्वमूर्ते
जय जय सर्वजनावनैकतान ।
जय जय हेमसमानदाम शोभिन्
जय जय दूरविनाशिचारुकाम ।। 111

जय देहवरार्धशोभिकान्त
जय जय भक्तजनैकभूषितान्त ।
जय जय देव वरैहि हृतारिजाड्य
जय जय भक्तहृदब्जमौढ्यनाथ ।। 112

जय जय पङ्कजमित्रचारुनेत्र
    जय जय पर्वतराज जाकलत्र ।
जय जय भस्मविभूष भक्तपोष
    जय जय कण्ठविचित्रहारशेष ।। 113

जय जय गाङ्गतरङ्गशोभिमौले
    जय जय विश्रुतवेदजालघोट ।
कारुण्यामृतसारपूरितलसन्नेत्रान्तसंवीक्षणं
    त्रैलोक्यावनदीक्षितं जपवटीराजत्कराम्भोरुहम् ।
साम्बं निर्जरदीर्घिकाप्रविलसत्सम्फुल्लपद्मावली-
    धूलीधूसरकर्बुरोज्ज्वलजटारेखं भजे शङ्करम् ।।114

त्वय्यासक्तमनास्त्वदेकशरणो वर्ते पुनस्त्वां विना
    स्वामिन् पर्वतसार्वभौमतनयाजाने न जाने परम् ।
स त्वं चेदिह न प्रसीदसि ततः कं प्रार्थयेऽहं प्रभो ।। 115

वन्दे सिन्दूर वर्णं सुरसरिदमृतांशूल्लसत्सत्कपर्दं
फालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम् ।
व्यस्तोरुन्यस्तपाणिं तरुणकुवलयं सन्दधत्या उमाया
वृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं नीलकण्ठं महेशम् ।।

।। इति श्रीशिवरहस्ये द्वादशांशे
जयस्तुतिर्नाम
चतुर्विंशोऽध्यायः ।।



## ।। पञ्चत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

मामाह शङ्करस्तत्र रहस्यं शैवमद्भुतम् ।
द्वादशांशसमायुक्तमिदमेवं महार्थदम् ।। 1

शिवज्ञानमहासारं धर्मकामार्थमोक्षदम् ।
शिवभक्तिकरं पुंसां कथारत्नमहोदधिम् ।। 2

श्राव्यं नव्यमिदं भव्यं गौर्यै दिव्यं शिवोदितम् ।
मया तदङ्कसंस्थेन श्रुतमेतन्महोदयम् ।। 3

पुण्यं शिवरहस्याख्यंमितिहासं महोदयम् ।
शृण्वतां पठतां वापि सर्वपापप्रणाशनम् ।। 4

शिवप्रसादकरणं स्वर्ग्यं पुण्यं महार्थवत् ।
आयुरारोग्यदं पुंसां शाम्भवानां महात्मनाम् ।। 5

भक्तिभाग्यप्रदं शम्भोः सर्वरोगविनाशम् ।
मामाह शङ्करोऽस्यैव फलं श्रवणसम्भवम् ।। 6

आपात्रं पात्रमपि च श्रवणे धारणे विभुः ।
कालं वा चारुपूजाया महिमा परमोदयम् ।। 7

मत्तः श्रृणु शिवोक्तं त्वं रहस्यमिदमद्भुतम् ।
गौर्यै प्रोक्तं शिवेनैव मया तच्छ्रुतमादरात् ।। 8

सहैभिर्गणमुख्यैश्च श्रृणुत्वं भूसुरैःसुरैः ।। 9

ईश्वर उवाच -

निगमागमसारमेतदाद्यं
सुगमं भक्तिमतां सुगद्यपद्यम् ।
वरविद्याप्रदमेतदाद्यहृद्यं
शिवशास्त्रं किल पापभेदशस्त्रम् ।। 10

शब्दै रष्टशतैश्च कर्कशमहातर्कैश्च मीमांसका-
भासैर्घाससमैः बुबोधयिषवो वेदान्ततान्ताश्च ये ।
श्रव्ये काव्यशतेऽपि ......................
व्यर्थानर्थकथासु बोधरसिका ये ते नराः पामराः ।।11

श्रुत्वेदं निगमान्तसारसुमधुप्राप्यं किमन्यत्फलं
श्रीविश्वेश्वरपादपद्मभजनैर्मुक्तिः परा शाम्भवैः ।
लभ्येदेवशिवैकसक्तमतिभिः पापौघसंहारिभिः
नान्यं श्राव्यमुशन्ति कोकिलगिरं श्रुत्वैव काकस्वरम् ।।

बत हतविधिनाद्य वञ्चिताः
सुरतिर्यङ्नररासभा भुवो भराः ।
परिहाय रहस्यशैवसारं
परिखिद्यन्ति मुधान्यशास्त्रलोलाः ।। 13

को वा वरं शिवरहस्य शिवैकसारं
तत्रत्यचित्रसुपवित्रतरार्थशब्दम् ।
अब्दैश्च कोटिभिरपि प्रमथाधिनाथ-
भक्तस्य शुद्धमनसः प्रसरत्यवश्यम् ।। 14

विदग्धोऽपि मुग्धो भवेदेव दग्धो
न दुग्धाम्बुधेः पानकृच्छ्वान जन्मा ।
कनिष्ठोऽपि शिष्टाद्वि शिष्टेष्ट भक्तः
स मुक्तः सभक्तः किलास्यार्थवेत्ता ।। 15

द्विजा अजाभाः किमु बाहुजाता
जिताः क्रुधा वर्गपराहताः सदा ।
वेश्यासु वश्याः किल वैश्यवर्गा
निसर्गतः शूद्रगणा दरिद्राः ।। 16

किं मत्तेभसमो मलाशनकिटिः किं वा द्विजोऽप्यन्यजो
भूयात्तद्वदुमे पुराणनिचयं शास्त्राणि काव्यं जयम् ।
हास्यं यास्यति कीशलास्यमिव त सन्नकीनां पुरो (?)
चान्यच्छैवरहस्यशाम्भवकथाकोट्यंशतो नो समम् ।। 17

गिरिजाजानिकथासुधासु विघ्नैः
परिनिघ्नन्ति दुरुत्तरोरुवाग्भिः ।
द्विजजाता अपि ते हि जारजा
विरजा नैव भवन्ति घोररूपाः ।। 18

दुःखैः सास्त्राविलाक्षा श्वसन नरशवाः शैवधर्मोज्झिता ये
ते भस्त्रात्तुल्यदेहारतिपतिशरजापार धाराभिपप्ताः ।
उस्त्रावद्विधिवर्जिता नरवरा स्वस्त्रा दुहित्रा रताः
न क्वापीश्वरचिन्तका नरकगास्ते वञ्चकाः केवलम् ।।19

रटत्सरटमौलिवत् करटिकुम्भ जान्दोलवत्
वृथार्थरहिताः परे परिपठन्ति शम्भोः कथाम् ।

कथाब्धिलहरीरसं शिवरहस्यरत्नाकरं
बिडालकसमा नराः परिलिहन्ति किं तृप्तये ।। 20

ये मत्कथासु विमुखास्त इहैव लोके
लेखाश्च दुर्मुखतराः खरशेफजाताः ।
ते सन्मुखा मम भवन्ति कथासु धीरा
ये मन्मुखा उपरि निःसृतपानपीनाः ।। 21

ये शाङ्कराः शिवरहस्यमधु प्रकृष्टं
पीत्वाथ षड्वदनपङ्कजजातमिष्टम् ।
तुष्टा भवन्ति गिरिजे त इह प्रकृष्टा
अन्ये तु दुष्टमतयः प्रभवन्ति कष्टाः ।। 22

ये निन्दन्ति पदार्थबोधरहिता दुस्तर्कशब्दे रताः
ते दुष्कर्मपराः परेतभवने ते वानराभा नराः ।
विद्वांसोऽपि बहुश्रुता अपि शिवे ते दुष्टविष्टाशनाः
कष्टाय प्रभवन्ति दुष्टजनुषस्ते मानुषाः पापिनः ।। 23

ये वा वरं शिवरहरमिदं प्रकृष्टं
निन्दन्ति हास्यमतयो यतयोऽपि मन्दाः ।
ते कष्टानि समाप्नुवन्ति नियतं नप्राप्तभिक्षाशनाः
तिष्ठन्त्येव परेतसंसदि चिरं दुष्टास्ततः कुष्ठिनः ।।24

शिष्टास्त एव जगति त्रिजगत्प्रतिष्ठां
निष्ठावताऽद्य हृदयेन तथाष्टमूर्तिम् ।
सम्पूजयन्त्यनिशमेव रहस्यमेतत्
संलेख्य पुस्तकवरं परिपूजयन्ति ।। 25

यो वा रहस्यमिदमेव शिवैकसारं
हाराय पर्वणि ददाति शिवस्य भक्तः ।
मुक्तिं परां व्रजति चारुशशाङ्कमौलिं
लिङ्गालयं व्रजति रुद्रगणो गिरीशम् ।। 26

भस्मत्रिपुण्ड्राक्षधरैर्वरैर्नरै-
हारैः शिवाचारपरैरहर्निसम् ।
श्राव्यं च भव्यं त्विदमेव नित्यशो
पुनः पुनर्जन्ममृतेर्विमुक्तये ।। 27

निवृत्तवृत्तैरिदमेव दिव्यं
श्राव्यं यशस्यं गिरिजे सुभव्यम् ।
शान्तैश्च वेदान्तरतैश्च दान्तै
नित्यं शिवाकान्तपदाब्जसक्तैः ।। 28

चक्षुः श्रोत्रविकासिगद्गदगलैरानन्दधाराश्रुभिः
सिञ्चन्तोऽङ्गमकैतवेन सुहृदा उत्फुल्लरोमाञ्चकाः ।
ये भक्ताः शिवभक्तिसारसरसाःस्ते सर्वदा संसृति-
पारावारमपारगर्तमलिनं शीघ्रं तरन्ति ध्रुवम् ।। 29

**स्कन्द उवाच -**

सदाशिवेदारवचो महेशी
श्रुत्वाऽभितुष्टाव तदा गिरीशम् ।
मुदातदालिङ्ग्य शिवा शिवं सा
रहस्यसार श्रवणेन हर्षिता ।। 30

गौरी उवाच -

शङ्गं सङ्गहरं कुरङ्गविलसद्बाहुं तुरङ्गागमं
गङ्गातुङ्गतरङ्गसङ्गत जटं चन्द्रोत्तमाङ्गं भजे ।
नेत्रीभूतपतङ्गरञ्जितमहाफालस्फुलिङ्गोल्लस-
ज्ज्वालालीढसुमन्मथाङ्गसुमहा भस्माङ्गरागं शिवम् ।।

हे वीतिहोत्रकृतनेत्र कलत्रगात्र
सत्रातिरात्रपरितोषितदृष्टिपात्र ।
पुत्रानिवाद्य परिपाहि मुनीन् गणेशा-
नत्राप्यमुत्र भगवन् दयया त्रिणेत्र ।। 32

सर्वामराद्य भगरोगहराद्य वैद्य
आखिद्यते पशुपते शिव पर्णशद्य ।
वेदान्तवेद्य निगमागमगद्यपद्य
संवेद्य हृद्यविभवाव सुरेष्वभेद्य ।। 33

स्कन्द उवाच -

इति देव्या स्तुतो देवो विश्वेशोऽथ महेश्वरः ।
मया स्तुतो नमस्कृत्य तदा विघ्नाधिपेन च ।। 34

कुमार उवाच -

हरिं हरन्तं तमुमासुकान्तं
वेदान्तभान्तं शशिकान्ततान्तम् ।
तान्तेषु विश्रान्तिदमन्तकान्तकं
स्मर स्मरान्तं हृदये नितान्तरम् ।। 35

**गजानन उवाच -**

पापं जहामि न सहामि भवोरुदुःखं
त्वामेव यामि हर सामिललाम सोमम् ।
सीमानमेव भगवन् च्छ्रुति धाम भूम
व्योमानमेव शरणं शरणाय यामि ।। 36

**सूत उवाच -**

त्रिणेत्रपूजासुविहीनमानसा
इनांशुतप्ता इव मानसङ्घाः ।
निर्वेदविप्रा इव ते परत्र
निर्वेदभाजोऽत्र भवन्ति सत्यम् ।। 37

परीवृढह्रदन्तरे चिरतरं मृडः क्रीडते
विगूढतमसःपरोऽप्यतिसुगाढ हृत्तापहः ।
विमूढमतिदूरगः श्रुतिशिखासुरूढप्रभा-
सगूढवरपाद्धरः सकललोकमीढ्वाहरः ।। 38

गौरीयल्लकलिङ्गपूजनरताः सायन्तने निद्रितैः
मल्लीमुल्लितमल्लिकादिनिवहैरुत्फुल्लहल्लोत्पलैः ।
गन्धाद्दिक्कृतकुन्दवृन्दकुटजैर्मन्दार सच्चम्पकैः
बिल्वामोदसुमैर्दलैश्च सुमहालिङ्गं विमुक्ताः सदा ।।

।। इति श्रीशिवरहस्ये द्वादशाम्शे
शिवगौरीसंवादे इतिहासफलकथनं नाम
पञ्चत्रिंशोऽध्यायः ।



## ।। षट्त्रिंशोऽध्यायः ।।

अनुक्रमणिकाध्यायमंशानां कथनं द्विजाः ।
तत्र तत्र महेशस्य कथाऽऽख्यानमनुत्तमम् ।। 1

महेशांशः प्रथमतो नामतश्चात्र विश्रुतः ।
जैगीषव्यप्रसादार्थं महादेवस्य चागमः ।। 2

गणानां देवसङ्घानां मम संवादकीर्तनम् ।
कैलासवर्णनं चैव द्वारगोपुरवर्णनम् ।। 3

कैलासेश्वरपूजाया लिङ्गाध्यायस्य कीर्तनम् ।
कैलासस्य तपश्चर्या गाणपत्यप्रसादनम् ।। 4

तन्मौलौ वसतिः शम्भोर्जिज्ञासाऽमरसत्तमे ।
ज्ञानार्थकथनं चैव आत्मलिङ्गस्य पूजनम् ।। 5

प्रथमेऽम्शे कथाख्यानमुक्तं देव्यै शिवेन हि ।
अष्टश्लोकसहस्रेण शिवेनोक्तोऽयमद्भुतः ।। 6

द्वितीयांशो भवेन्नाम्ना कथितः श्रीशिवेन हि ।
देव्या तपःप्रसादं च मणिद्वीपोपवर्णनम् ।। 7

चिन्तामणिगृहस्यात्रवर्णनं श्रीपुरस्य च ।
तस्मात्कैलासगमनं कामकामेश्वरत्मकम् ।। 8

विग्रहं देवदेवस्य हिमाचलसमागमः ।
हिमाचलालोकनं च कैलासस्य शिवस्य तु ।।

देव्याश्च प्रेषणं तत्र मनोन्मन्याः समुद्भवः ।
दुर्वाससो महिम्नश्च कथनं तत्प्रसादनम् ।। 10

द्वितीयेऽम्शे प्रकथितं महादेवेन तत्र हि ।
श्लोकानां त्रिसहस्रेण गौर्यै तत्र महामुने ।। 11

तृतीयो हरसंज्ञोऽत्र त्रिणेत्रेणैव चाकथि ।
केदारदर्शनं तत्र व्यासस्यापि द्विजैः सह ।। 12

गायत्र्यास्तपसः सिद्धिर्देव्यानयनकीर्तनम् ।
गणानां प्रेषणं चैव रुद्रस्तवनकीर्तनम् ।। 13

वेदपादस्तवश्चापि चमकप्रार्थना तथा ।
तीर्थेशचन्दनस्यापि महात्म्यं मानसार्चनम् ।। 14

श्रीशैलकीर्तनं चैव जनकस्य मुनेस्तथा ।
संवादो वै रत्ननिधेः पद्मावत्या प्रकीर्तितः ।। 15

यमलोकस्य वृत्तान्तं नर्मदागङ्गयोर्वरम् ।
भस्मरुद्राक्षमाहात्म्यं व्रतस्य परिकीर्तनम् ।। 16

राज्ञो यमस्य पुत्रैश्च शिवार्चनकथानकम् ।
शिवदुण्ढिचरित्रं च भागद्वयमिदं द्विजाः ।। 17

त्रयस्त्रिंशत्सहस्रेण श्लोकैरंशः प्रकीर्तितः ।
चतुर्थः शिवसंज्ञोऽत्र कथितोऽस्ति शिवेन हि ।। 18

नन्दिभृङ्ग्युपमन्यूनां गाणपत्यस्तुतिक्रमः ।
चतुः सहस्रतः प्रोक्तो ह्यंशो गौर्यै पिनाकिना ।। 19

पञ्चमो भगसंज्ञो हि लिङ्गद्वादशवर्णनम् ।
वामदेवस्तुतिश्चैव नामसाहस्रकीर्तनम् ।। 20

गङ्गद्वारप्रभासस्य प्रभावः पुष्करस्य च ।
षट्सहस्रेण कथितो देव्यै देवेन शम्भुना ।। 21

शङ्कराख्यांशकः षष्ठः व्याससूत्रादिकीर्तनम् ।
श्रुतिसिद्धान्तराद्धान्तो ज्ञानयोगप्रकाशनम् ।। 22

निदाघऋभुसंवादः अविमुक्तानुवर्णनम् ।
पञ्चसाहस्रतः प्रोक्तः शिवायै श्रीशिवेन हि ।। 23

उग्रो नाम्ना सप्तमांशः कथितः शिवकाशकृत् ।
सहस्रनामकथनं वैष्णवं तु महिम्नकम् ।। 24

पुष्पदन्तमहिम्नश्च नाम्नामष्टोत्तरं शतम् ।
श्रीमद्दक्षिणकैलासशोणवृद्धाचलप्रभोः ।। 25

श्रीमदभ्रसभायाश्च काञ्चीकुम्भेश्वरस्य च ।
मध्यार्जुनप्रभावं च कीर्तितं तत्र विस्तरात् ।। 26

चतुर्दश सहस्रेण श्लोकानां तत्र शङ्करः ।
भीमाख्ययाऽष्टमांशोऽत्र कथितः शङ्करेण हि ।। 27

कद्रूसुपर्णीसंवादः काश्यपस्य प्रसादनम् ।
अमृताहरणं तत्र नागभूषत्वमीशितुः ।। 28

पातालिङ्गमहिमा बिल्वोत्पत्तिः प्रकीर्तिता ।
चतुः सहस्रतः श्लोकैः प्रोक्तो देवेन तत्र हि ।। 29

सदाशिवाख्यो नवमः कलिधर्मप्रबोधकः ।
भूतभव्यादिभक्तानां सुचरित्रकथाश्रयः ।। 30

सहस्रसप्तश्लोकेन सोंऽशः प्रोक्तः शिवेन हि ।
ईश्वराख्योऽत्र दशमः भस्मरुद्राक्षधारणात् ।। 31

रुद्रपञ्चाक्षरस्यापि शिवलिङ्गमहोदयः ।
शिवधर्मप्रशंसार्थाः शिवभक्तार्चने फलम् ।। 32

अष्टश्लोकसहस्रेण कथितो.स्ति पिनाकिना ।
एकादशो महादेवः प्रोक्तोऽयं नामतो मुने ।। 33

आभिषेचनिकानां तु कालं पुष्पेषु वै फलम् ।
मासि मास्यर्चनस्यापि सोमवाराष्टमीषु च ।। 34

प्रदोषे च चतुर्दश्यां  पूजने च फलं द्विज ।
षट्पञ्चाशद्देशमध्यस्थशिवक्षेत्रानुकीर्तनम् ।। 35

षट्सहस्रेण कथितः श्लोकैरत्र शिवेन हि ।
ईशाख्यो द्वादशांशोऽयं यत्र दक्षविनाशनम् ।। 36

उद्वाहश्च तथा शम्भोः स्कन्दोत्पत्यसुरार्दनम् ।
स्कन्दस्य च शिवस्यैव नामसाहस्रकीर्तनम् ।। 37

रुद्रस्तुतिर्वेदपादजयस्तुत्युपवर्णनम् ।
अविमुक्तप्रवेशं च जैगीषव्यस्य सत्तमाः ।। 38

अनुक्रमेण कथनं श्रवणे महिमाऽस्य हि ।
तथा पञ्चसहस्रेण श्लोकैरेष शिवोदितः ।। 39

शिवस्यैवं रहस्यार्थरत्नाकरमिदं मुने ।
प्रथमः षाष्टिकोऽध्यायो द्वितीयस्त्रिविनाकृतः ।। 40

तृतीयस्त्रिशतं माने त्रिधाभूतोऽयमुत्तमः ।
चतुर्थः पञ्चत्रिंशच्च चत्वारिंशच्च पञ्चमः ।। 41

षष्ठः पञ्चाशता प्रोक्तः सप्तमः पञ्चविंशतिः ।
शिवस्थानानुकथनः सप्तमो द्विशतात्मकः ।। 42

अष्टमस्त्रिंशदध्यायः षष्षष्टिर्नवमे द्विज ।
दशमस्त्रिंशतं प्रोक्तो मुने एकादशोऽपि हि ।। 43

पञ्चाशद् द्वादशांशोऽत्र ह्यध्यायाः परिकीर्तिताः ।। 44

**स्कन्द उवाच -**

शमायनतपोधनाः शिवपदाब्जसद्भावनाः
सनन्दनसनातनभृगुवसिष्ठबोधायनाः ।
शिवार्चकजनावनाः शिवकथाश्रवात्पावना
भवन्तु मम हृज्जना भवपदाब्जसंसेवनाः ।। 45

तुरङ्गमातङ्गशताङ्गधात्रीं
पवित्रपात्रं प्रददाति गां वसु ।
सत्रातिरात्रैर्यजते स वेदा-
नधीयते तीर्थजलाप्लुतः सः ।। 46

ततोऽधिकं पुण्यमवाप्य मोदते
किंनाकपृष्ठं सुकृतामथौकः ।

सदाशिवस्यास्य रहस्यसंश्रवात्
    कैलासमौलौ निवसन् गणो भवेत् ।। 47

सांख्यव्याख्यान सौख्यप्रदमदमहिमासंख्यहेतौ न जीवे
योगो रोगैक भोगो भवति जनिमतां रागदो नो विरागः।
सञ्जायेत भवेषु भाग्यजनुषां वैराग्यभाग्योदयः
आरोग्यं खलु शङ्कराङ्घ्रिभजनाच्छैवैः परं लभ्यते ।।48

कायं सायमुमासहायचरणाम्भोजार्चनाज्जायते
सापायं न उपायसाध्यगदयुक् कोऽयं न जानात्यमुम् ।
हायं पापमवश्यमव्ययमजं शान्तं तुरीयं शिवम्
ध्यात्वा हृत्कमले वसैव नियतं कैलासवासादरः ।। 49

श्रीकण्ठरत्नाडिसुजम्बुकेश-
    जप्येशमध्यार्जुनकुम्भघोणे ।
श्वेते वने ब्रह्मवने च काञ्च्यां
    श्रीकालहस्तावरुणाचले वा ।। 50

वृद्धाचले वाऽभ्रसभासुगोनगे
    श्रुतीवने सेतुवरे सुपुण्ये ।
हालास्यके वेणुवने च ताम्रा-
    कवेरजागाङ्गसुनर्मदारे ।। 51

गोदावरी कृष्णभवा च यामुना-
    तुङ्गासु संभेदवरे च मज्जनः ।
असावथात्राप्यविमुक्तवास-
    योग्यः शिवप्रीततनुर्भवेत ।। 52

भक्तोऽविमुक्तेऽपि वसन्नथेश-
कृपा वशाद्वासमहो लभेत ।
कैलासवासोऽप्यविमुक्तवासिभिः
प्राप्येत शम्भोः किल भक्तियोगैः ।। 53

ये शङ्करास्यकमलान्निगमागमान्त्य-
पुष्पोत्थसुन्दरमरन्दरसेऽर्थवादम् ।
ते मन्वते खलु नराः खरवानरादि-
गर्भेषु जारजभवा नवदुःखभाजः ।। 54

शिवरहस्यमिदं शिववर्णितं
यदि सकृत्पठते भुवि भक्तितः ।
नाऽवद्यमेषु भविता भववीक्षणेन
भावेषु घोरभवजं विभवं भजेन्न ।। 55

यस्तूर्ध्वपुण्ड्रमलिके विदधन्नलीकं -
नालीकजासनशतं निरये पचेत् सः ।
यो विष्णुसाम्यकधिया हृदये भवेद्यो-
विश्वाधिविश्वगणयोनिषु संभवेत्सः ।। 56

भस्मत्रिपुण्ड्ररहितः शिवलिङ्गमत्र-
सम्पूजनोज्झितमतिः श्रुणुयाद्रहस्यम् ।
शैवं विनिन्दति न नन्दति बुद्धिपूर्वं
बौद्धेषु जायति चिरं निरयागतोऽपि ।। 57

योऽर्थाशया शिवरहस्यमिदं त्वशैवे
संश्राव्य भव्यपदवीं न स जातु विन्देत् ।
लालामुखे च निरये कृमिभुक् स तिष्ठेत्
विष्ठासु निष्ठुरकशाग्रविकीर्णदेहः ।। 58

तस्मात्परं शिवरहस्यमिदं महार्थं
श्राव्यं शिवार्चकजनैर्द्विजशाम्भवेभ्यः ।
भस्माक्षधारिभिरहर्निशमेतदेव
पाठ्यं महेशमतिभिर्यतिभिश्च नित्यम् ।। 59

गोभूहिरण्यकनकाम्बररौप्यकूप्य
धान्यैधनैर्गजतुरङ्गवरैस्तथान्यैः ।
सम्पूजयेद् गृहवरैर्वरशाम्भवं यः
धन्योऽथ शम्भुगणपः स शिवं यजेच्च ।। 60

प्रत्यंशं परिपूज्य शाम्भववरं चैतस्य संवाचकं
भावान् भोज्य सुभोज्यषड्रसवरैः स्रक्चन्द्रनाद्यर्हणैः ।
ताम्बूलैर्वरगोसुदक्षिणधनैर्योवा सहस्रं शतं
एकं वा दश वा सुशाम्भववरान् विश्वेशसन्तुष्टये ।। 61

तस्मै प्रसन्नसुमुखः प्रभवेन्महेशो
विघ्नेशषण्मुखसमं प्रविभावयेत्तम् ।
वित्तर्धिधान्यधनभूमिगवाश्वसङ्घ-
मातङ्गपुत्रसुकलत्रयुतं करोति ।। 62

प्राज्यं राज्यमुमापतिः प्रति दिशेत्प्रासादमत्युज्ज्वलं
योगं भोगमपि प्रसादसुमुखो भक्तेषु मुक्तिं तथा ।
शक्तिं भुक्तिममुत्र पुत्रसहितं पारुष्यहीनं वचः
आयुष्यं प्रददाति पुष्यति परं जोघुष्यते तद्यशः ।। 63

ये वै लिखन्ति सुमुखा मखजातपुण्यं
ते वै लभन्ति च लभन्ति महेन्द्रलेखाः ।
ते सन्मुखाः शिवगृहस्य रहस्यतारं
ते षण्मुखोपमधियो न हि दुःखभाजः ।। 64

योऽस्याक्षरश्रवणकृत् क्षरयत्यघौघं
सुश्लोक एव स भवेत् किल श्लोकपाठी ।
अध्यायमात्रपठनश्रावणाद्विमुक्तः
योऽस्यार्थविप्रतिपदं स भवेद्विमुक्तः ।। 65

भिन्ना ये हृदयेन दुःखनिकरैः सन्ना जराद्यैर्गदैः
अन्नानां पतिमीश्वरं च जगतां शीघ्रं प्रसन्नं कुरु ।
कैलासाचलवासमोदसुमनस्यार्थाय[1] काशीं व्रज
दैवैर्भूसुरसत्तमैश्च गणपैर्युक्तो विमुक्तिं व्रज ।। 66

[2]यल्लाभान्नपरं च लाभमधिकं हृल्लासमन्यन्मुने
उल्लासाय मनः स्वसन्निभकथासाम्यं न चोल्लस्यति ।। 67

---

1. कैलासाचलवासमोदसुमनः प्रीत्यै च काशीं व्रजेति पाठः सङ्गच्छते । सुमनः शब्दस्य सकारान्तत्वेन सुमनस्येति पदप्रयोगस्य असाङ्गत्यात् ।

2. अत्रत्य पदानां साधुत्वे विद्वांस एव प्रमाणम् ।

नयामि शिवपूजनैर्दिवसमीशतोऽन्यं सुरं
न यामि शरणान्तरं प्रविजहामि पापं सदा ।
भजामि शिवमन्वहं प्रति यजामि यज्ञैरहं
प्रयामि मनसा हरं प्रति हरामि चित्तं सदा ।। 68

**स्कन्द उवाच -**

भव भवदीयकथासुधाब्धिवीचि-
परिमज्जनतोऽपि सौख्यभाक् स्यात् ।
इति किलसुरता विचारतान्ता
वनिताभोगरतापि नाकपृष्ठे ।। 69

विरता निरताऽधुना कथायां
शरणाय प्रभवेत ते पदाब्जे ।। 70

**।। इति श्रीशिवरहस्ये द्वादशाम्शे**
**फलश्रवणकथने जैगीषव्यसंवादे**
**षट्त्रिंशोऽध्यायः ।।**



## ।। सप्तत्रिंशोऽध्यायः ।।

**सूत उवाच -**

जैगीषव्यस्तदा श्रुत्वा षण्मुखात्सुरतायनम् ।
द्वादशांशसमायुक्तं गौर्यै यच्छङ्करोदितम् ।। 1

शिवं शिवरहस्याख्यमितिहासवरं मुदा ।
शिवानन्दकथासारं तारकं पापवारकम् ।। 2

पुण्यं स्वस्त्ययनं पुंसां श्रवणात्सर्वकामदम् ।
भव्यं दिव्यप्रशस्यं च पुत्रारोग्यप्रवर्धनम् ।। 3

सनातनमिदं धर्म्यं शिवधर्मकथाश्रयम् ।
पशुपाशविमोकार्थं सर्वेषां शङ्करोदितम् ।। 4

गौर्यैस्वहृदयं गोप्यं नाभक्ते प्रतिपादयेत् ।
आयुरारोग्यदं ह्येतत् इतिहासं शिवोदितम् ।। 5

भस्मधारिभिरेवैतच्छ्राव्यं भव्यं तु शाम्भवैः ।
त्रिपुण्ड्रधारिभिर्नित्यं तथा रुद्राक्षधारिभिः ।। 6

पञ्चाक्षरजपासक्तै रुद्रावृत्तिपरैर्द्विजैः ।
शिवलिङ्गार्चनपरैर्भक्तैरेव शिवार्थिभिः ।। 7

गृहस्थैर्वर्णिभिश्चैव वनस्थैर्यतिभिस्तथा ।
भस्मरुद्राक्षधृग्भिश्च नियतैः शिवयोगिभिः ।। 8

निवृत्ततर्षैर्यतिभिः शिवस्योत्कर्षवादिभिः ।
वेदवेदान्तसारज्ञैः शाम्भवैर्भस्मधारिभिः ।। 9

नियमाच्छाम्भववरैः श्रोतव्यं चान्यवर्णकैः ।
क्षत्रियैर्वैश्यशूद्रैश्च श्राव्यं शैवं रहस्यकम् ।। 10

भस्मधृग्भिस्तु नियतं शिवबुध्या प्रपूज्य तम् ।
शाम्भवं वाचकं कुर्याद्भस्मरुद्राक्षधारिणम् ।। 11

नोर्ध्वपुण्ड्रधरं कुर्याद्वाचकं चास्य सत्तमाः ।
तस्माच्छ्रुत्वा नरा यान्ति नरकं स्वपितामहैः ।। 12

शिवज्ञानं न जायेत तस्माच्छ्रुत्वापि शाङ्कराः ।
अन्धः किमन्धान्नयते कूपमध्यस्थितोऽनघाः ।। 13

यथा शिवसमो देवो न भूतो न भविष्यति ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 14

विभूषणं भस्मनोऽन्यन्नास्ति न श्रूयते श्रुतौ ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 15

यथा त्रिपुण्ड्रात्परमं पावनं नैव विद्यते ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 16

यथा पञ्चाक्षरजपान्नास्ति पातकशोधनम् ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 17

यथा रुद्रजपादन्यन्नास्ति प्रीतिकरं विभो ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 18

यथा रुद्रार्चनाच्छ्रेष्ठं नास्ति वेदान्तसंस्तुतम् ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 19

यथोत्तमं क्षिवक्षेत्रमविमुक्तं श्रुतीरितम् ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 20

प्रदोषकालः कालेषु यथा शैवार्चने (शर्वार्चने वरः) ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 21

व्रतानां तु यथा श्रेष्ठं शिवरात्रिव्रतं बुधाः ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 22

वारव्रते यथा श्रेष्ठं सोमवारार्चनं द्विजाः ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 23

तिथ्यर्चने यथा श्रेष्ठा शम्भोः कालाष्टमी वरा ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 24

पर्वार्चने यथा श्रेष्ठा शम्भोर्नित्यं चतुर्दशी ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 25

त्रिणेत्रप्रीतिकृन्नित्यं यथाह्याद्रर्क्षमीश्वरि ।
तथा शिवरहस्यस्य तुल्यमन्यन्न विद्यते ।। 26

पत्रेषु च यथा मुख्यं बिल्वपत्रं शिवार्चने ।
तथा शिवरहस्येन तुल्यमन्यन्न विद्यते ।। 27

श्रुत्वैतद्भक्तिमाप्नोति शम्भोर्नित्यं विमुक्तये ।
तथा भस्मनि रुद्राक्षे शिवलिङ्गार्चने द्विजाः ।। 28

पञ्चाक्षरे च रुद्राक्षे सोमवारार्चने यथा ।
शिवक्षेत्रनिवासेषु अविमुक्ते विशेषतः ।। 29

शिवनाम्नि सदा भूयाद्भक्तिरस्य श्रवाद् द्विजाः ।
तया भक्त्या विमुच्यन्ते ससुरासुरमानवाः ।। 30

भक्तिप्रदमिदं पुण्यमितिहासोत्तमं वरम् ।
दिव्यं शिवरहस्याख्यं द्वादशाम्शसमुज्ज्वलम् ।। 31

यस्य तुल्यं न हि श्रेष्ठं पुराणं भारतं तथा ।
काव्यं रामायणं वापि संसारवरदुःखदम्[1] ।। 32

न तानि भक्तिदान्याहुः शम्भोः शाम्भवसत्तमाः ।
भक्तिदं केवलं ह्येतच्छम्भुनोक्तमिदं शुभम् ।। 33

पुण्यं शिवरहस्याख्यं भक्तिसारमहोदयम् ।
भक्तैरेव सदा श्राव्यं अभक्तैर्न कदाचन ।। 34

सत्यं सत्यमिदं सत्यमेवं गौर्यै वदत्तदा[2] ।
सावधानेन युष्मासु भक्तेषु प्रतिपादितम् ।। 35

यथा मृगेन्द्रसङ्काशो जम्बुकः किं [3]भविष्यति ।
तथा शिवरहस्यस्य साम्यमन्यन्न[4] विद्यते ।। 36

पद्मरागसमं रत्नं काचखण्डो भवेत्किमु ।
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 37

---

1. संसारस्य /संसारे यद्वरं दुःखं तद् द्यति खण्डयति नाशयति इति तथा ।
2. गौर्यै जगाद सः ।
3. जम्बुको न भविष्यति इति कथनमेव युज्यते।
4. सममन्यन्न विद्यते इत्येव सङ्गतः पाठः ।

यथा चन्दनसङ्काशः *पारिभद्रो भविष्यति ।
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 38

उद्यद्युमणिसङ्काशः खद्योतो द्योतते किमु ।
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 39

किं रासभोऽश्वसङ्काशो भवेदेष प्रघोंषवाक् ।
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 40

कनकाचलसङ्काशः पांसुपिण्डो भविष्यति ?
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 41

कोकिलाकाकलीलापं कुर्याद् ध्वाङ्क्षोऽतिरूक्षवाक् ।
तथा शिवरहस्यस्य साम्यमन्यन्न विद्यते ।। 42

श्रुत्वाऽयं षण्मुखाद्विप्रो जैगीषव्यः सुरैर्गणैः ।
नत्वा तुष्टाव तं स्कन्दमष्टमूर्तितनूभवम् ।। 43

विनयावनतो भूत्वा ब्रह्मविष्ण्वादिभिर्गणैः ।
जैगीषव्यो महायोगी हव्यवाहप्रभो मुनिः ।। 44

**जैगीषव्य उवाच -**

सिन्दूरारुण सिन्धुरेन्द्रवदनं सान्द्राम्बुदानोत्कटं
जातानन्दसुबृम्हितारवकृतोद्भ्रान्ताखिलाशागजम् ।
मौल्यान्दोलन कर्णतालसुशिवध्यानोन्मिषोन्मेषणैः
अन्तर्बाह्यगतं शिवं स्वकहृदा पश्यन्तमीक्षे सदा ।। 45

---

* पारिभद्रो न भासते पारिभद्र DEVADARU TREE

स्कन्द त्वं शिखिवाह लेखसुमुखः श्रीषण्मुखस्त्वं सखा
भ्राता बन्धुवरस्त्वयाद्य पितृमान् शम्भुः पिता चासि मे ।
ज्ञानाम्भोधिसुधाकरस्त्वमधुना विज्ञानदस्त्वं गुरुः
त्वत्पादार्ककरोरुदारितहृदाकाशान्धकारं परम् ।। 46

भारं मे भवसागरं सुखकरं तर्तुं पुनर्गोष्पदम् (?)
सङ्क्रन्दनानन्दन चन्दनार्द्र-
गात्र त्रिणेत्रवरपुत्र नमो नमस्ते ।
क्रौञ्चाद्रिसूदन सनातनवन्द्यपाद
बृन्दारवन्द्य परिपाहि मुनीन् दृशा ते ।। 47

अपितामह देव शक्रबन्धो
गिरिमातामह दारिदैत्यसिन्धो ।
प्रणवार्थपदादिबोधहेतुं
विदधे त्वं प्रददासि हे नमस्ते (?) ।। 48

शरवणभवचरणं शरणं न येषां
न हि तेषां तरणं भवोरुसागरस्य ।
मरणं प्रभवं न भवे भवे-
द्यदि सुब्रह्मदया रसालसानाम् ।। 49

सुब्रह्मण्यो ब्राह्मणानां हि देवः
अब्रह्मण्यं हंसि पाहि द्विजान्नः ।
त्राता देवानां विजयस्य प्रदाता
गाङ्गेयस्त्वं नन्दितात्मासि भक्ते ।। 50

भवता भवतापहारिणा
भवसिन्धौ पतिताः समुद्धृताः ।

सुरता विरताऽद्य दुःखमार्गे-
ऽमरतां प्राप कथामृतोत्थवर्षैः ।। 51

सर्पाङ्गहारचरणं शरणं प्रपन्ना-
स्तेषु प्रसर्पकगणा इव याजिशालाम् ।
सर्पन्ति पुण्यान्यघसञ्चयानि
भीतान्यपासर्पति तत्र चित्रम् ।। 52

यत्र त्रिणेत्रपदपङ्कज मित्रभावाः
पत्रैश्च बिल्वतरुजैः सततं पवित्रैः ।
चित्रं किमत्र यजतां जगतां महेशः
पात्रं करोति करुणा रसदृग् ह्यमुत्र ।। 53

अपायदे किं विबुधादिसत्पदे
मुदे विनोदेऽपि न चित्तसक्तिः ।
यथा शाङ्गलिङ्गार्चनेष्वन्तरङ्गं
मनो मे न पापौघसङ्गाद्बिभेति ।। 54

न तुङ्गगङ्गाम्भसा स्नानपानैः
पुनीते यथा भाव सद्योऽघभङ्गः ।
मरिष्यन्ति सर्वे प्रहृष्यन्ति भोगैः
नरिष्यन्त पूर्वाः सुघुष्यद्यशो यः (?) 55

परित्यज्य पृथ्वीं धनं बन्धुवर्गं
क्व याता गतं तैश्च साकं न वासः ।
सहायमन्यन्नविहाय यास्यता-
मुमासहायोऽवति भक्तिवर्यान् ।। 56

अपायकायप्रविनाशकाले
उपपायमन्यं निवसाम काशीम् ।। 57

**सुरा ऊचुः -**

श्रीमारमार सुकुमार करात्तशक्ते
शक्तिप्रियात्मज सुरासुरजेतृशक्ते ।
शूरादितारकहरामरबृन्दसेना-
धीशाशु नाशय सदा भवदुःखजालम् ।। 58

भ्रातुर्वैरिवहाप्रियात्मज हराहाराङ्ग आहारकृत्
संस्थागान्तक पौत्र हस्तसुमहाशक्ते नमस्ते सदा
शूरापारसुदैत्य तारकमहादर्पघ्न कन्दर्पतः
साहस्राधिककान्तिसुन्दर महामारारिहृत्पङ्कज-
द्वाराकार कुमार धीरसुरतासेनापते पाहि नः ।। 59

मोदान्मदाच्चामनचारुवाचा
पञ्चाननो यत्प्रथयत् षडाननम् ।
सनातनं पुण्यरहस्यमेतत्
रसायनं नः श्रवणे भवाय नः ।। 60

**गणा ऊचुः -**

कुञ्जरमुखानुकूलः
पञ्चमुखस्य स्वयं किशोरोऽपि ।
श्रिततारकोऽपि सततं
तारकवैरी शिवात्मजो जयतात् ।। 61

षोढामुखः सुराणां
वोढाऽनीकस्य पानं मृडपुत्रः ।

द्रोढा दनुजकुलेभ्यो
लेढा वल्लीशुभाघरसुधायाः ।। 62

मुनय ऊचुः

स्वर्नारीजनबृन्दवेणिविलसन्मल्लीसुमप्रोद्गल-
न्माध्वी पूरतरङ्गमेदुरपदद्वन्द्वारविन्द प्रभो ।
स्वामिन् प्रोन्नतशैलमास नमतां कष्टापदां वारकः
शक्तस्त्वं खलु शक्तिमानिति गिरं जल्पन्ति लोके जनाः।।

शाङ्गाङ्गसङ्गाखिल पापभङ्गः
तवाभिषङ्गोऽपि सुमङ्गलाय नः ।
गणाभिषङ्गोऽपि कुतः सुराणां
मुनीश्वराणा वनशैलवासिनाम् ।। 64

जैगीषव्यतपः प्रसादनवशात् विश्वेशसन्दर्शनं
ईशाज्ञावशतस्तवाम्बुजमुखसुस्यन्दिभृङ्गा वयम् ।
जाता भक्तिरसार्द्रसारहृदयाः किं नोऽत्र सम्प्रार्थ्यते
ह्याशास्ते शिवशैलवासमधुना वासाय काश्यां नमः ।। 65

तत्रालिङ्गनवन्दनेन गमपास्ते वै सुरा भूसुरा
जैगीषव्ययुताः कुमार सुकुमाराभं पदाम्भोरुहम् ।
नेमुर्हृष्टहृदा विभासिततया भास्वद्विवस्वत्प्रभाः
काशीं वै शिवलोकवासरसिका द्रष्टुं च विश्वेश्वरम् ।।66

स्कन्द उवाच -

भवाज्ञया भावुकदर्शनेन
भवाङ्गसङ्गः समभूत्सुहर्षदः ।

तेनैव ............. संश्रवा
मुक्ताःस्थ यूयं पुनरस्तु दर्शनम् ।। 67

इतिताननुशास्य शम्भुसूनु-
र्ननाम विघ्नेश्वरमीश्वरं शिवम् ।
इति प्रयाता मुनयश्च ते सुराः
गणा मुनीन्द्रेण प्रणम्य षण्मुखम् ।। 68

काशीं नाशितपापराशिमगमन् कारुण्यवाराशिकां
तां वाताशिवराः सुरा गणवरा दृष्ट्वा प्रहृष्टान्तराः ।
वासायैव मुदं दधुः सुमनसो नत्वा च विश्वेश्वरं
लिङ्गं गाङ्गतरङ्गसङ्गभुजगेन्द्रेन्दूत्तमाङ्गं शिवम् ।।69

नेत्रीभूत पतङ्गमङ्गरहितानङ्गाङ्गभस्मप्रभा-
व्याकीर्णाङ्गमतङ्गकृत्तिवसनं फालस्फुलिङ्गं शिवम्।।70

तटिनी जटिलालकं महेशं
निटिलाक्षं वटमूलचारुदेहम् ।
करटीपटमेव काट्यमीशं
प्रभजन्ति स्तुतिभिः सुरा गणास्ते ।। 71

तत्रत्योत्तम लिङ्गमण्डलमिदं भूमण्डले पावनं
दृष्ट्वापूज्य सुबिल्वपङ्कजसुमैस्तत्रान्नपूर्णामपि ।
दुण्डिं भैरवदण्डपाणिमपि ते सम्पूज्य हृष्टास्तदा
देवास्ते मुनयो गणाः शरवणाज्जाताज्ञया संस्थिताः ।। 72

जैगीषव्योऽपि योगी प्रबलगतिमतां प्राप्य गेहं गुहायाः
कैलासाचलवासनिश्चयमतिस्तप्स्यत्ययं शम्भुहृत् ।

दृष्ट्वा तस्य गुहां न गर्भजगुहां यात्येव तन्मानवो
लिङ्गं तत्परिपूजितं च मनुजाः पश्यन्तु काश्यां चिरम्।।73

देवाश्चापि गणेश्वरा मुनिवराः लिङ्गं प्रतिष्ठाप्य ते
लिङ्गान्यत्र च मामकानि कृपया विश्वेश्वरस्याज्ञया ।
तत्प्रान्ते विपुलं तपः सुविपुलं चासङ्ख्यजन्मर्जितं
कैलासाचलवास दुर्घटमिदं सञ्चिन्तयन्तो ययुः ।। 74

कैलासमौलिं प्रययुर्गणास्तदा
सुरा ययुर्लोकमवापुराश्रमम् ।
तदा द्विजास्ते गणपा वरं हरं
नत्वा च गौरीं च जगुस्तदागमन् ।। 75

संवादमेषां च तदा मुदा हरः
श्रुत्वा गणैः कीर्तितमत्र सत्यम् ।
कुमारवक्त्रान्मुदितश्च शङ्करः
स्वाज्ञावशात्तत्र गतोऽपि मुक्तम् ।। 76

ततः पुनः कालवशेन तं मुनिं
जिगीषितान्तर्हृदयेन शङ्करम् ।
ध्यानेन चात्मानमुदारसत्वं
मुनिं विमुक्तं त्वथ कर्तुमीहते ।। 71

।। इति श्रीशिवरहस्ये द्वादशाम्शे मुनिसमागमो नाम
सप्तत्रिंशोऽध्यायः ।।



## ।। अष्टत्रिंशोऽध्यायः ।।

तुष्टुवुः सुरसङ्घास्ते स्कन्दं सेनापतिं तदा ।
नामभिस्तत्र मुदिताः सहस्राष्टशतैर्मुदा ।। 1

स्तुत्वा च स्तोत्रवर्येण देवास्तत्र षडाननम् ।
क्वचेन तदा देवाः स्तोत्रवर्येण सत्तमाः ।। 2

**देवा ऊचुः -**

स्कन्दनामसहस्रस्य ऋषिश्च परमेश्वरः ।
अनुष्टुप् छन्द एवास्य सुब्रह्मण्योऽधिदेवता ।। 3

सौं बीजं शक्तिरेवास्य शक्तिः परतरा स्मृता ।
ग्लौं कीलकं सर्वकामसिध्यर्थे जप ईरितः ।। 4

गाङ्गेयं वह्निगर्भं शरवणजनितं शक्तिहस्तं कुमारं
ब्रह्मण्यं स्कन्ददेवं गुरुमचलभिदं मन्त्रतेजःस्वरूपम् ।
सेनेशं तारकघ्नं गणगण सहितं कार्तिकेयं षडास्यं
सुब्रह्मण्यं मयूरध्वजरथसहितं कार्तिकेयं नमामि ।। 5

ओं सुब्रह्मण्यः सुरेशानः सुरारिकुलनाशनः ।
ब्रह्मण्यो ब्रह्मविद्ब्रह्म ब्रह्मविद्यागुरुर्गुरुः ।। 6

ईशानगुरु रव्यक्तो व्यक्तरूपः सनातनः ।
प्रधानपुरुषः कर्ता कर्म कार्यं च कारणम् ।। 7

श्रीकुमारो ह्यधिष्ठानो भोक्ता भोगश्च केवलः ।
अनादिनिधनः साक्षी नियतं नियमो यमः ।। 8

वाक्पतिर्वाक्प्रदो वाग्मी वाच्यो वक्ता च वाचकः ।
पितामहगुरुर्लोकः गुरुस्तत्वार्थबोधकः ।। 9

वेदान्तो वेदगुह्यश्च वेदशास्त्रप्रभेदकः ।
सर्वविद्यात्मकः शान्तश्चतुष्षष्टिकलागुरुः ।। 10

मन्त्रार्थो मन्त्रमूर्तिश्च मन्त्रतन्त्रप्रवर्तकः ।
मन्त्री मन्त्रो मन्त्रबीजं महामन्त्रोपदेशकः ।। 11

महोत्साहो महाशक्तिर्महाशक्तिधरः प्रभुः ।
जगत्स्रष्टा जगत्पाता जगन्मूर्तिर्जगन्मयः ।। 12

जगदादिरनादिश्च जगद्बीजं जगद्गुरुः ।
ज्योतिर्मयः प्रशान्तात्मा सच्चिदानन्दविग्रहः ।। 13

सुखमूर्तिः सुखकरः सुखी सुखवराकृतिः ।
ज्ञाता ज्ञानं ज्ञेयरूपो ज्ञप्ता ज्ञानफलं बुधः ।। 14

विष्णुर्जिष्णुर्ग्रसिष्णुश्च प्रभविष्णुः सहिष्णुजः ।
तितिष्णुरजिरं भूष्णुर्वर्धिष्णुः शान्तविग्रहः ।। 15

ऋजुः सुगृह्यः सुलभो दुर्लभो लोभवर्जितः ।
अभिज्ञो ज्ञश्च यज्ञात्मा शिवज्ञानप्रदो गुहः ।। 16

हृदयादिरहङ्करो भूतादिर्भूतभावितः ।
भूतं भव्यं भवसुतो भूतभव्यभवत्प्रभुः ।। 17

देवसेनापतिर्नेता कुमारो देवनायकः ।
तारकारिर्महावीरः शूरपद्मशिरोहरः ।। 18

अनेककोटिब्रह्माण्डपरिपूर्णोऽसुरान्तकः ।
स्फुटाट्टहासकृत्तारतारकासुरनाशनः ।। 19

महाक्रोधो महोत्साहो महाबलपराक्रमः ।
महाबुद्धिर्महासिद्धिर्महामायो महाभुजः ।। 20

रणभीमः शत्रुहरो धीरो दान्तो गुणोत्तरः ।
महाधनुर्महाबाणो महादेवप्रियात्मजः ।। 21

महाभुजो महापादो महातन्त्रो महाद्युतिः ।
महर्द्धिर्महनीयाङ्गो मयूरवरवाहनः ।। 22

मयूरबर्हातपत्रो मयूरनटनप्रियः ।
महानुभावोऽमेयश्रीरमेयात्मा महाप्रभुः ।। 23

सुगुणो दुर्गुणद्वेषी निर्गुणो निर्मलोऽमलः ।
चञ्चलो विमलः कान्तो कमलापतिपूजितः ।। 24

कालः कमलपत्राक्षः कलिकल्मषनाशनः ।
महारणो महायोधो महाबुद्धिप्रदायकः ।। 25

महारथो महाभागो महाभीष्टफलप्रदः ।
चन्द्रचूडाङ्गभूभागविहारणविशारदः ।। 26

चन्द्रपीडाकराम्भोजपरिमृष्टभुजावलिः ।
ईशाननयनानन्दकन्दो लावण्यशेवधिः ।। 27

लम्बोदरसहक्रीडालम्पटः शरसम्भवः ।
अमरीनयनालोकचकोरीपूर्णचन्द्रमाः ।। 28

सर्वाङ्गसुन्दरः श्रीश श्रीकरः श्रीप्रदः शिवः ।
वल्लीसेनापतिर्वीरो जपाशोणग्रतालुकः ।। 29

षड्जमध्यमगान्धारतन्त्रीसुमधुरस्वरः ।
मेघगम्भीरनिर्घोषः प्रियवाक् प्रीतनिर्जरः ।। 30

स्मितवक्त्रो ह्युत्पलाक्षश्चारुगम्भीरवीक्षणः ।
कर्णान्तदीर्घनयनः कर्णभूषणभूषितः ।। 31

सुकुण्डलश्चारुगण्डः कम्बुग्रीवो महाहनुः ।
पीनाङ्गो गूढजत्रुश्च पीनवृत्तभुजावलिः ।। 32

रत्नाङ्गो रत्नकेयूरकङ्कणो रत्नभूषितः ।
व्याकीर्णकलसद्दामप्रकोष्ठवलयोज्ज्वलः ।। 33

*रेखाङ्कुशध्वजच्छत्रपाणिपद्ममहायुधः ।
सुरलोकाभयकरबालारुणकरावलिः ।। 34

अङ्गुलीयकरत्नांशुद्विगुणोद्यन्नखाङ्कुरः ।
पीनवक्षा महाहारो नवरत्नविभूषितः ।। 35

हिरण्यगर्भो हेमाङ्गो हिरण्यकवचो हरः ।
हिरण्मयशिरस्त्राणो हिरण्याक्षो हिरण्यदः ।। 36

हिरण्यनाभस्त्रिवलीललितोदरसुन्दरः ।
सुवर्णसूत्रविलसद्विशङ्कटकटीतटः ।। 37

---

* "छत्राङ्कुशपताकाब्जरेखारञ्जितसत्करः" इति समानार्थकः दोषरहितश्च प्रयोगः सङ्गच्छते ।

पीताम्बरधरो मुक्तासरोद्भासितमध्यमः ।
नवरत्नावलिप्रोद्यन्मेखलोऽङ्गुलिभूषणः ।। 38

पीवरोरुः सुवृत्तोद्यत्सुजानुः सुप्रगुल्फकः ।
शङ्खचक्राब्जकुलिशध्वजरेखालसत्पदः ।। 39

सुरेन्द्रमकुटप्रोद्यन्मणीरञ्जितपादुकः ।
पूज्याङ्घ्रिश्चारुनखरः सुरालिनतपादुकः ।। 40

पार्वतीपाणिकमलपरिमृष्टाङ्गसुन्दरः ।
मत्तमातङ्गगमनो मान्यो मान्यगुणाकरः ।। 41

क्रौञ्चदैत्यमहोद्दामवक्षःस्थलविदारणः ।
सुगमो दुर्गमो दुर्गो [1]दुरारोहोऽरिदुःसहः ।। 42

सुभगः सुमुखः सूर्यः सूर्यमण्डलमध्यगः ।
सृष्टिकर्तोपसंहर्ता कृपासंरक्षिताखिलः ।। 43

जगत्स्रष्टा जगद्भर्ता जगत्संहारकारकः ।
स्थावरं जङ्गमो जेता विजयो विजयप्रदः ।। 44

जयशीलो जितारातिर्जितमानो जितासुरः ।
जितकामो जितक्रोधो जितमोहमदो युवा ।। 45

कामदः कामभृत्कामी कामिकाद्यागमप्रियः ।
जितकल्पः कलिध्वंसी कल्हारकुसुमप्रियः ।। 46

---

1. अत्रसहस्रनामप्रसङ्गे विष्णुसहस्रनामगतामानि सन्निविष्टाति सन्निवेश्चितानि वा दृश्यते - उत्तरत्र च अभीक्ष्णं दृश्यते ।

रामो रमयितारम्यो रमणीजनवल्लभः ।
रसज्ञो रसमूर्तिश्च रस्यो नवरसात्मकः ।। 47

रतात्मा रसिकात्मा च रासक्रीडापरो रतिः ।
कोटिसूर्यप्रकाशाभः सोमसूर्याग्निलोचनः ।। 48

कालाभिज्ञः कलारूपः कलावान् सकलप्रभुः ।
बिन्दुनादकलामूर्तिः कालातीतः क्षराक्षरः ।। 49

मात्रास्वराकृतिश्चैक एकमात्रो द्विमात्रकः ।
त्रिमात्रकश्चतुर्मात्रो मात्रतीतोऽतिमात्रकः ।। 50

व्यञ्जनात्मा वियुक्तात्मा युक्तोमुक्तिप्रदो गुरुः ।
विसर्जनीयोऽनुस्वारः सर्ववर्णतनुर्महान् ।। 51

अकारात्मा उकारात्मा मकारात्मा त्रिवर्णकः ।
ओङ्कारश्च वषट्कारः स्वाहाकारः स्वधाकृतिः ।। 52

अकृतिर्भवनो हव्यं होताऽध्वर्युर्महाहविः ।
ब्रह्मोद्गाता सदस्यश्च बर्हिरिध्मः समिच्चरुः ।। 53

गव्यः पशुः पुरोडाशश्चामिक्षा वाजिवाहनः ।
पवनः पावनः पूतः पवमानः पराकृतिः ।। 54

पवित्रः परिधिः पूर्णपात्रः पूर्णमनोरथः ।
विशोधनः पशुपतिः पशुपाशविमोकः ।। 55

पाकयज्ञो महायज्ञो यज्ञो यज्ञपतिर्यजुः ।
यज्ञाङ्गो यज्ञ इज्यश्च यज्वा यज्ञफलप्रदः ।। 56

यज्ञाङ्गभूर्यज्ञभूमिर्यज्ञश्रीर्यज्ञवाहनः ।
याज्ञिको यज्ञविध्वंसी यज्ञेशो यज्ञरक्षकः ।। 57

सहस्रबाहुर्विश्वात्मा सहस्राक्षः सहस्रपात् ।
सहस्रवदनो नित्यः सहस्रात्मा विराट् स्वराट् ।। 58

सहस्रशीर्षा विश्वश्च तेजः प्राज्ञो ह्यथात्मवान् ।
अणुर्बृहत्कृशः स्थूलो दीर्घो ह्रस्वो लघुर्गुरुः ।। 59

सूक्ष्मः सूक्ष्मतरोऽनन्तो विश्वरूपो निरञ्जनः ।
अमृतेशोऽमृताहारोऽमृतदाताऽमृताङ्गवान् ।। 60

अहोरूपस्त्रियामा च सन्ध्यारूपो दिनात्मकः ।
मुहूर्तो घटिकारूपो यमरूपो यमात्मकः ।। 61

पूर्वाह्णरूपो मध्याह्नरूपः सायाह्नरूपकः ।
अपराह्णोऽतिनिपुणः सवनात्मा प्रजाकरः ।। 62

वेद्यो वेदयिता वैद्यो वेदद्रष्टा विदांवरः ।
विनयः सत्यसन्धश्च विद्वान् विद्वज्जनप्रियः ।। 63

विश्वगोप्ता विश्वभोक्ता विश्वकृद्विश्वभेषजम् ।
विश्वम्भरो विश्वपतिर्विश्वेशो विश्वतोमुखः ।। 64

विश्वसाक्षी विश्वहन्ता वीरो विश्वम्भराधिपः ।
वीरबाहुर्वीरहन्ता वीराग्र्यो वीरसैनिकः ।। 65

वीरवादप्रियः शूरः शूरसेनः सुराधिपः ।
शूरपद्मासुरद्वेषी तारकासुरभञ्जनः ।। 66

ताराधिपस्तारहारः शूरहन्ता सुरार्चितः ।
शरवान् शरसम्भूतः शक्तः शरवणोद्भवः ।। 67

शाम्भवः शङ्करः शम्भुः साधुः साधुजनप्रियः ।
सारङ्गः सागरः सर्वः शर्वः शर्वप्रियः स्वराट् ।। 68

गङ्गाधरोऽतिगम्भीरो गभीरहृदयोऽनघः ।
अमोघघोषो विक्रम्यः शम्भुः शक्रप्रपूजितः ।। 69

चक्रपाणिश्चक्रपतिर्दिक्चक्रान्तमहीपतिः ।
सार्वभौमः सुरपतिः सर्वलोकाभिरक्षकः ।। 70

चिद्रूपः सत्यसङ्कल्पः सत्यः सत्यवतांवरः ।
सत्यप्रियः सत्यपतिः सत्यलोकजनप्रियः ।। 71

भूतो भव्यो भूतनाथो भावाभावविवर्जितः ।
भूतादिर्भूतमध्यस्थो भूतविप्लवकारकः ।। 72

भूतिभूषितसर्वाङ्गो भूताधिष्ठानकोऽव्ययः ।
बीजरूपो गुणानिधिस्तेजोराशिरकल्मषः ।। 73

कल्मषघ्नः कल्यहीनः कारुण्यामृतवारिधिः ।
कल्याणमूर्तिः कल्याणाचलकार्मुकसम्भवः ।। 74

कामात्मा कामदः कान्तः कामक्रोधविवर्जितः ।
गोप्ता गोपायिता गुप्तिर्गुणातीतो गुणाश्रयः ।। 75

सत्वमूर्ती रजोमूर्तिस्तमोमूर्तिश्चिदात्मकः ।
देवसेनापतिर्दिव्यमहिमा महिमाकरः ।। 76

प्रकाशकृतपापघ्नः पवनः पावनोऽनलः ।
कैलासनिलयः कान्तः कनकाचलसन्निभः ।। 77

विद्रुमो वेदमूर्तिश्च व्याकृतिः कृतिरक्षकः ।
इन्द्रोपेन्द्रादिवन्द्याङ्घ्रिरुरुजङ्घ उरुक्रमः ।। 78

विक्रान्तो विजयाक्रान्तो विजयी विनयप्रियः ।
अविनीतजनध्वंसी सर्वापगुणवर्जितः ।। 79

शोषाचलैकनिलयो वल्लीवाञ्छितविभ्रमः ।
शाम्भवः शम्भुतनयः शङ्कराङ्गविभूषणः ।। 80

स्वयम्भूः स्ववशः स्वस्थः पुष्करः पुरभिद्भवः ।
मनुर्मानवगोप्ता च स्थविष्ठः स्थविरो युवा ।। 81

बालः शिशुर्नित्ययुवा नित्यकौमारवान् महान् ।
अग्राह्यरूपो ग्राह्यश्च सुग्राह्यः सुन्दराकृतिः ।। 82

प्रमर्दनः प्रभूतश्रीर्लोहिताक्षोऽरिमर्दनः ।
त्रिधामा त्रिककुब्भव्यस्त्रिलोकनिलयो लयः ।। 83

शर्मदः शर्मवान् शर्मी शरण्यः शरणालयः ।
स्थाणुः स्थिरतरः स्थेयान् स्थिरश्रीः स्थिरविक्रमः ।। 84

स्थिरप्रतिज्ञः स्थिरधीर्विश्वरेताः प्रजोद्भवः ।
अव्ययः प्रत्ययः प्रष्ठः सर्वज्ञः सर्वदर्शनः ।। 85

सर्ववागीश्वरः सिद्धः शिवयोगः शिवप्रियः ।
मनस्वी मानदो मान्यो जैगीषव्यगुरुर्बुधः ।। 86

समात्मासमदर्शी च सम्मतः समदर्शनः ।
भस्मत्रिपुण्ड्कषट्फालो रुद्राक्षकरकङ्कणः ।। 87

शिवलिङ्गार्चनप्रीतः षडक्षरजपादरः ।
शुचिः शुचिमनाः शुद्धः शुचिकीर्तिः शुचिश्रवाः ।। 88

रौद्रकर्मा महाकर्मा रुद्रांशो रुद्रसम्भवः ।
अनेकमूर्धाविश्वात्मानेकबाहुररिन्दमः ।। 89

वीरबाहुगणाध्यक्षो विष्वक्सेनो वितर्दनः ।
सर्वदः सर्वगः सर्वः सर्ववेदान्तगोचरः ।। 90

कविः पुराणः शास्ता च सुब्रह्मण्यालयो हरिः ।
भ्राजिष्णुर्विष्णुविनुतः कृष्णकेशः कृशोदरः ।। 91

भोजनं भाजनं भोक्ता विश्वभोक्ता विशां पतिः ।
विश्वयोनिर्विशालाक्षो विरागो वीरसेवितः ।। 92

पुष्यः पुरुयशाः पूज्यः पुरुकीर्तिः पुनर्वसूः ।
सुरेन्द्रः सर्वलोकेन्द्रो महेन्द्रोपेन्द्रवन्दितः ।। 93

विश्ववेद्यो विश्वपतिर्विश्वभुग्विश्वभेषजम् ।
मधुर्मधुरसङ्गीतो माधवः शुचिरूष्मलः ।। 94

शुक्लः शुभ्रगुणः शुक्रः शोकहर्ताशुचिस्मितः ।
महेष्वासो विगुप्तिश्च महीभर्ता महीपतिः ।। 95

मरीचिर्दमनो मायी मातङ्गगतिरुद्भुतः ।
हंसः सुपर्णः सुमना भुजङ्गाभभुजावलिः ।। 96

पद्मनाभः पशुपतिः पापघ्नः पापपारगः ।
पण्डितः परवीरघ्नः स्कन्धः सेनापतिर्महान् ।। 97

अर्षणो दुष्टशास्ता च दुर्धर्षो युद्धहर्षणः ।
विश्वात्मा सुविधेयात्मा विश्वप्रख्यातविक्रमः ।। 98

सन्मार्गदर्शको मार्गरक्षको मार्गपालकः ।
अनिरुद्धोऽनिरुद्धश्रीरादित्यो दैत्यमर्दनः । 99

अनिमेषोऽनिमेषेऽथस्त्रिजङ्गद्ग्रामणीर्गुणी ।
संवृतात्मा निवृत्तात्मा सर्वात्माऽमितविक्रमः ।। 100

अर्चिष्मानच्युतप्रीतः पाशभृत्पावको मरुत् ।
सोमः सौम्यः सोमनुतः सोमयुक् सोमभूषणः ।। 101

सर्वसामप्रियः साम सर्वयज्ञस्तुतो गुरुः ।
उपशान्तिरुमासूनुः उत्फुल्लमुखपङ्कजः ।। 102

अमृत्युरसुरारातिर्मूर्तो मृत्युभयोज्झितः ।
मन्दारकुसुमापीडो मदनान्तकवल्लभः ।। 103

माल्यवान् मदनाकारो मालतीकुसुमप्रियः ।
सुप्रसादः सुराध्यक्षः सुमुखः सुमहायशाः ।। 104

वृषपर्वा विरूपाक्षो वृषसेनो वृषोदरः ।
मुक्तोऽमुक्तगतिर्भोक्ता मुकुन्दो मुद्गरो मुनिः ।। 105

श्रुतवान् श्रुतशास्त्रश्च श्रुतिगम्यः श्रुतिस्तुतः ।
वर्धमानो वनरतिः वानप्रस्थनिषेवितः ।। 106

वाग्विदो वावदूकात्मा वासुदेवो वरप्रदः ।
महेश्वरो महेशाष्वासः शक्तिहस्तस्त्रिशूलधृक् ।। 107

ओजस्तेजश्च तेजस्वी प्रतापी सुप्रतापवान् ।
ऋद्धिः समृद्धिः संसिद्धिः सुसिद्धिः सिद्धसेवितः ।। 108

अमृतांशुश्चामृतपो ह्यमृतश्चामृतप्रदः ।
चन्द्रमाश्चन्द्रवदनश्चण्डश्चन्द्रसुशीतलः ।। 109

मतिमान्नीतिमान्नीतिः कीर्तिमान् कीर्तिवर्धनः ।
औषधं चौषधीनाथः प्रतीपो भवमोचनः ।। 110

भास्करो भास्करतरो भानुः पाशविमोचनः ।
चतुर्युगव्यवस्थाता युगधर्मप्रवर्तकः ।। 111

अयुगो मिथुनं योगो योगज्ञो योगपारगः ।
महाशनो महादाता महाघोरपराक्रमः ।। 112

युगान्तकृद्युगावर्तो दृश्यादृश्यस्वरूपवान् ।
सहस्रजित्सहस्रात्मा सहस्रायुधमण्डितः ।। 113

अनन्तशूरसंहर्ता सुप्रतिष्ठः सुशाङ्करः ।
अक्रोधः क्रोधहन्ता च शत्रुक्रोधविवर्धनः ।। 114

विश्वमूर्तिर्विश्वबाहुर्विश्वदृक् विश्वतोमुखः ।
विश्वपो विश्वनेता च द्यावाभूम्योर्विवर्धनः ।। 115

अपांनिधिरकर्ता च अन्नादो विनयोज्जवलः ।
षाण्मातुरोऽम्बुजभवः प्राणदः प्राणवर्धनः ।। 116

स्कन्दः स्कन्दधरो धुर्यो धैर्यौ धैर्यविवर्धनः ।
जितारातिर्धनाध्यक्षो वैद्यनाथोऽनसूयकः ।। 117

देवदेवो बृहद्भानुः स्वभानुः पद्मवल्लभः ।
अकुलः कुलनेता च कुलेष्टश्च कुलेश्वरः ।। 118

कुलाचलसुतासूनुरसुहृच्चासुरार्दनः ।
निधिर्निधिपतिः पद्मः शङ्खो निधिपतिः पतिः ।। 119

शतानन्दः शतावर्तः शतायुश्च शतायुधः ।
पद्मासनः पद्मनेत्रः पद्माऽङ्घ्रिः पद्मसंस्थितः ।। 120

कारणात्मा च कार्यात्मा कामात्मा कामवर्धनः ।
त्रिशरीरः शरीरी च शरीरारोग्यवर्धनः ।। 121

जाग्रत् प्रपञ्चाधिपतिर्विश्वलोकेश्वरेश्वरः ।
सुषुप्तिस्थो भीमसेनो महासेनस्तुरीयकः ।। 122

स्वापनः स्वःपतिर्लीनो विश्वमूर्तिर्विलोचनः ।
वीरायुधो वीरवेषो वीरायुधकरोज्ज्वलः ।। 123

सर्वलक्षणसम्पन्नो लक्ष्मीतान् सर्वलक्षणः ।
समयज्ञो यज्ञसेनः समाधिः सामवल्लभः ।। 124

अमलो मान्यसुप्रीतो वल्लभो भल्लवो बलः ।
अहेतुर्हेतुमान् हेतुर्हेतिधृक् हर्तुराश्रयः ।। 125

विक्षरो रोहितो रक्तो विरक्तो विजनप्रियः ।
महीधरो मातरिश्वा माङ्गल्यो मकरालयः ।। 126

मध्यः शतादिरक्षोभ्यो रक्षोदारणविक्रमः ।
गुहो गुहाशयो गोप्ता गुहेशो गुणवर्धनः ।। 127

निरुद्योगो महोद्योगो निरीहो निर्णयो मधुः ।
महावेगो महाक्रोधो महाप्राणो महेश्वरः ।। 128

अमृताश्यमृताहारो मितभाष्यमितार्थवित् ।
अक्षोभ्यः क्षोभकृत्क्षेमः क्षेमवान् क्षोभनाशनः ।। 129

रुद्रो रुद्रप्रियो मत्तो मत्तकेकिवहः परः ।
धर्माधर्मविदां श्रेष्ठो वैकुण्ठो वासवप्रियः ।। 130

परधीरपराक्रान्तः परितुष्टः परासुहृत् ।
रञ्जनो रणगो रुष्टो रमणो रात्रिवर्धनः ।। 131

विरजो विक्रमो विद्वान् वीरभद्रप्रियः क्रतुः ।
विनायकानुजो धाता नन्दप्रियसखो वटुः ।। 132

सर्वशक्तिमतां श्रेष्ठः सर्वदैत्यभयङ्करः ।
शत्रुघ्नः सर्वलोकेशः शत्रुश्लाघ्यपराक्रमः ।। 133

शिशिरो वर्षको ग्रीष्मो वसन्तो माधवो मधुः ।
वसन्तकेलिनिरतो वनकेलिविशारदः ।। 134

पुष्पधूलीपरिचितो वनपल्लवशेखरः ।
जलकेलीपरिवृतो जह्नुकन्योपलालितः ।। 135

गाङ्गेयो गीतकुशलो गङ्गापूरविहारणः ।
गङ्गाधरो गणपतिर्गणायुतसमावृतः ।। 136

विश्रामो विक्रमोद्भूतो विश्वभुग्विश्वदक्षिणः ।
विश्वगोविश्वधृग्घोरो विश्वरक्षणतत्परः ।। 137

विनतानन्दकारी च पार्वतीप्राणनन्दनः ।
विशाखः षण्मुखः शास्ता कार्तिकेयो वरप्रदः ।। 138

एवं सहस्रनाम्नैव सम्पूज्य सुरसत्तमाः ।
पुनः शताष्टनाम्नैव तुष्टुवुर्मुनयस्तदा ।। 139

मुनय ऊचुः -

द्विषड्भुजं षण्मुखमम्बिकासुतं -
कुमारमादित्यसमनतेजसम् ।
वन्दे मयूरासनमग्निसन्निभं
सेनान्यमीशं सकलेष्वभीष्टदम् ।। 140

स्कन्दो गुहः षण्मुखश्च फालनेत्रसुतः प्रभुः ।
पिङ्गळः कृत्तिकासूनुः शिखिवाहो द्विषड्भुजः ।। 141

द्विषण्णेत्रः कुमारश्च पिशिताशनभञ्जनः ।
तारकासुरसंहर्ता रक्षोबलनिषूदनः ।। 141

मत्तः प्रमत्त उन्मत्तः सुरसैन्याभिरक्षकः ।
देवसेनापतिः प्राज्ञः कृपालुर्भक्तवत्सलः ।। 142

उमासुतो महासेनः कुमारः क्रौञ्चदारणः ।
सेनानीरग्रजन्मा च विशाखः शङ्करात्मजः ।। 143

शिवस्वामी गणस्वामी सर्वस्वामी सनातनः ।
अनन्तशक्तिरक्षोभ्यः पार्वतीप्रियनन्दनः ।। 144

गङ्गासुतः शरोद्भूत आहुतः पावकात्मजः ।
जृम्भः प्रजृम्भ उज्जृम्भः कमलासनसन्नुतः ।। 145

एकवर्णो द्विवर्णश्च त्रिवर्णः सुमनोहरः ।
चातुर्वर्ण्यः पञ्चवर्णः प्रजापतिरहःपतिः ।। 146

अग्निगर्भः शमीगर्भो विश्वगर्भः सुरारिहा ।
हरिद्वर्णः शुभकरः पटुवाक् वटुवेषधृक् ।। 147

पूषा गभस्तिर्गगनश्चन्द्रवर्णः कलाधरः ।
मायाधरो महामायः कैलासावसथः शिखी ।। 148

विश्वयोनिरमेयात्मा तेजोनिधिरनामयः ।
परमेष्ठी परब्रह्म वेदगर्भो विराड् वसुः ।। 149

पुलिन्दकन्याभर्ता च महासारस्वतप्रदः ।
आश्रिताखिलदाता च चोरघ्नो रोगनाशनः ।। 150

अनन्तशक्तिरानन्दः शिखिण्डिकृतकेतनः ।
डम्भः परमडम्भश्च महाडम्भो वृषाकपिः ।। 151

कारणं कान्तदेहश्च कारणातीतविग्रहः ।
अहिरूपोऽमृतवपुः प्राणायामपरायणः ।। 152

विरुद्धहर्ता वीरघ्नो रक्तश्यामललोचनः ।
बहुवर्णो गणपतिः स्वभक्ताभीष्टदायकः ।। 153

सर्वेश्वरो लोकगुरुरसुरानीकनाशनः ।
सुब्रह्मण्यो गुहः स्कन्दो ब्रह्मण्यो ब्राह्मणप्रियः ।। 154

एवमष्टोत्तरशतनामभिः स्तौति यो नरः ।
तस्याभीष्टानि सर्वाणि प्रयच्छति गुहो मुहुः ।। 155

**गणेश्वर उवाच -**

कनककुण्डलमण्डलराजित
सरसिजामलसुन्दरलोचनम् ।
निशितशस्त्रशरासन धारिणं
शरवणोद्भवमीशसुतं नमः ।। 156

सिन्दूरारुणमिन्दुकान्तिवदनं केयूरहारादिभि-
र्दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्य सौख्यप्रदम् ।
अम्भोजाभयशक्ति कुक्कुटधरं दिव्याङ्गरागोज्ज्वलं
सुब्रह्मण्यमुपास्महे प्रणमतां सर्वार्थसिद्धिप्रदम् ।। 157

शिखां रक्षेत्कुमारस्तु कार्तिकेयः शिरोऽतु ।
ललाटं पार्वतीसूनुर्विशाखोऽवतु भ्रूयुगम् ।। 158

नेत्रेऽव्यात्क्रौञ्चभेदी च नासिकां शिखिवाहनः ।
कर्णद्वयं शक्तिधरः कर्णमूले षडाननः ।। 159

गण्डयुग्मं महासेनः कपोलौ तारकान्तकः ।
ओष्ठद्वयं च सेनानी रसनां शिखिकेतनः ।। 160

तालुं कलाधरः पातु दंष्ट्रां देवशिखामणिः ।
गाङ्गेयश्चुबुकं पातु मुखं पातु शिखोद्भवः ।। 161

हनू हरसुतः पातु पातु कण्ठं सदाग्निभूः ।
ग्रीवां गौरीसुतः पातु कक्षौ कारुण्यवारिधिः ।। 162

स्कन्धौ ममावतात्स्कन्दो बाहुलेयो भुजौ मम ।
बाहू भवोद्भवः पातु करौ षाण्मातुरोऽवतु ।। 163

अङ्गुली पिङ्गलः पातु हृदयं मधुमित्रजित् ।
नाभिं ममोदरं चैव सुब्रह्मण्यः सदावतु ।। 164

मध्यं जगद्विभुः पातु नाभिं द्वादशलोचनः ।
कटिं द्विषड्भुजः पातु गुह्यं पातु गुहः सदा ।। 165

जघनं जाह्नवीसूनुः पृष्ठं प्रमथनायकः ।
ऊरू पायादुमापुत्रो जानुयुग्मं जगद्धितः ।। 166

जङ्घे पातु जगत्पूज्यः पातु गुल्फौ महाबलः ।
पादौ पातु परं ज्योतिः सर्वाङ्गं कुक्कुटध्वजः ।। 167

ऊर्ध्वं पातु महोदारोऽप्यधस्तात्पातु शाङ्करिः ।
पार्श्वं नः पातु पापघ्नः सर्वतः पातु शक्तिधृक् ।। 168

पूर्वाह्णेऽव्यात्परं ब्रह्म मध्याह्नेऽवतु तारजित् ।
अपराह्णे गुहः पातु रात्रौ दैत्यान्तकोऽवतु ।। 169

त्रिसन्ध्यं च सुधीः पातु सर्वदा पातु बर्हिगः ।
बहिष्ठं षण्मुखः पातु अन्तःस्थं कृत्तिकासुतः ।। 170

व्रजन्तं सुरसैन्येशः अटन्तं पाशधृग्विभुः ।
शयानं पातु शूरघ्नो मार्गे पातु कुमारकः ।। 171

वने रणे गिरिचरः सदा रक्षतु मां वटुः ।
सुब्रह्मण्यस्य कवचं धर्मकामार्थमोक्षदम् ।। 172

मन्त्राणां परमं मन्त्रं गुह्याद्गुह्यतरं सदा ।
पठन् श्रृण्वन् सर्वपापैः रोगैश्चापि विमुच्यते ।। 173

पुत्रप्रदमपुत्राणां षष्ठ्यां भक्त्या स्तवश्रवात् ।। 174

वक्त्रैः षड्भिः शरदिन्दुप्रभाभि-
रुद्यत्फुल्लाम्भोरुहाक्षैर्युतोऽव्यात् ।
बर्हिध्वजश्चन्द्रकचित्रबर्ह-
बर्हीन्द्रवाहः कृतचूडबर्हः ।। 175

ताभिः प्रसन्नरुचिभिः प्रसुवर्णचित्रः
पापादस्मात् कार्तिकेयः कुमारः ।
बर्हीन्द्रपक्षक्षपितारिपक्षं
सेनान्यमीडे ऽखिलपातकघ्नम् ।। 176

कारुण्यपूर्णनयनं कमलायताक्षं
कस्तूरिकातिलकशोभितफालदेशम् ।
भक्तार्तिभञ्जन विशोभितबाहुदण्डं
डिम्भं मुदा हि शिवयोः प्रभजन्तु सर्वे ।। 177

श्रीमच्चन्द्रकलाधरात्मजमजं श्रृङ्गारशोभाकृतिं
गौरीपीनघनस्तनामितपयः सारज्ञमज्ञासनम् ।
अम्भोजप्रभवाभिमानजलदोदञ्चत्प्रचण्डानिलं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 178

कारावासनिवासखिन्नविधिहृत्कञ्जात भानुं पुन-
स्तद्वक्त्राब्जचतुष्टयस्तुतिमहाकल्याणशीलं विभुम् ।
क्रौञ्चारिं पितृपादवन्दितपदं षाण्मातुरं शाङ्करिं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 179

ओङ्कारार्थ समर्थनार्थकवचोभूषाविशेषान्वितं
पाथोजाभषडाननं शिखिकुलाधीशोरुतुङ्गध्वजम् ।
स्कन्दं सुन्दरकुन्ददन्तमनघं शम्भोर्गुरुं शाश्वतं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 180

शर्वाणीप्रणवोपदेश चतुरश्रीकण्ठकण्ठीरव -
श्रोतारं रजनीशुभाङ्कविलसत्सिंहामसनस्थं गुहम् ।
वल्लीपीनपयोधरेक्षणपरं स्वर्णाहिराजाकृतिं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 181

ब्रह्माण्डैकसहस्रकाष्टभरणप्राचुर्यधैर्यस्फुर-
त्कोपाटोपदुरापपापघटिताहङ्कारशूरान्तकम् ।
सेनान्यं सुरमान्यमुन्नभुजं चिन्ताब्धिकुम्भोद्भवं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 182

मार्ताण्डायुतभासमानमणिभृल्लावण्यतारुण्यजि-
त्तत्कारुण्यशरण्यपञ्चकमयप्रोद्यत्फणाशालिनम् (?)
दिव्याङ्गं भवभङ्गसङ्गतकृपा तुङ्गोत्तरङ्गालयं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 183

सेवातत्परमानवार्पितबृहत्कूश्माण्डपादावनी-
तूलस्थूलमरीचिसर्षपसमग्रोपायनं मायिनम् ।

नानावाद्यमृदङ्गशङ्खपटली घोषाङ्कपूजान्वितं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 184

पुत्रस्नेहविमोहवर्धितशिवावक्षोजकुम्भस्रव-
न्नीरापूरकुमारपूर्वविलसद्धारातटीवासिनम् ।
विष्णुब्रह्मसुरासुरार्चितमणिस्वर्णोज्ज्वलत्पादुकं
सुब्रह्मण्यमगण्यपुण्यचरितं वन्दे परं देशिकम् ।। 185

देवं शक्तिधरं कुमारमतुलं दिव्यावतारं वटुं
भावातीतमतीतसंसृतिमनः पद्माग्रसद्मप्रियम् ।
भक्त्या ये प्रणमन्ति ते गतभयाः कारुण्यभाजः सदा
भुक्त्वा भोगसुखं त्वदीयकृपया मुक्ता भवन्ति ध्रुवम् ।।186

वृन्दारवृन्दा मुनिवर्यसङ्घा
गणेश्वराः स्कन्दसहस्रनामभिः ।
तथाष्टनाम्नां शतकेन तत्र
देवं तदा तं कवचेन तुष्टुवुः ।। 187

स्कन्दं मुदा स्तोत्रवरैः सुभक्तितो
यस्तोष्यति प्रीतमनाः सुभक्तितः ।
तस्मिन् प्रहृष्टो विदधाति कामान्
नकामयुक्तोऽपि विमुक्तिदो भवेत् ।। 188

।। इति श्रीशिवरहस्ये द्वादशांशे
अष्टत्रिंशोऽध्यायः ।।



## ।। एकोनचत्वारिंशोऽध्यायः ।।

मुनय उचुः -

व्रजामि किल काशिकां अघकुलादिसन्नाशिकां
विशाम हितकर्णिकां द्विज भजाम तां कालिकाम् ।

पश्येम विश्वेश्वरमेव तत्र
यजेम बिल्वैश्च समर्चयामः ।
स्नास्याम गङ्गाम्भसि पापमुक्त्यै
व्रजेम मुक्तिं परमामथान्ते ।। 2

मुनयो विनयोज्जवलास्तदानीं
तनयैः स्वैःसुकलत्रशिष्यसङ्घैः
मथिताग्नय एव भग्नदुःखा
शिवमर्च्योपययुस्तदा विमुक्तिम् ।। 3

सूतेन तेन मुनयोऽपि भस्मभूषा
योषाविरक्तहृदयाः सदयास्तदानीम् ।
काषायमात्रवसना ययुरीशकाशी-
वासाय चारुतपसे धृतनिश्चयास्ते ।। 4

इति होचुरचुम्बिताक्षरोरुवाचं
कृतकृत्याः प्रसमापितोरुसत्राः ।
स्तुतिनत्या प्रतिपूज्य सूतमिष्टं
शिपिविष्टोरु कथामृतावृतं तदानीम् ।। 5

---

विचित्रपदसन्दृब्धश्लोकानामर्थस्फूर्तिस्तु न जायते ।

ऋषय ऊचुः -

किं सत्रैरखिलैर्व्रतादिकरणैर्दानैश्च दीनावनैः
किं वा पावनतीर्थगाहनमहाधर्मैरलं नः फलम् ।
प्राप्यं न श्रुतुराशिशेखरलसत्कैलासवासे कदा
मोदायैव सदास्तु शङ्करकृपापीयूषकं केवलम् ।। 6

किं तत्प्रीतिकरं महेन्द्रसदनं यत्रैव वत्स्यामहे
आदेहान्तविभूतिधारणपरा पुण्ड्राक्षमालाधराः ।
दिव्यश्रीशिवलिङ्गपूजानरता बिल्वैश्च नीरैःपरं
कल्याणाय सदाऽविमुक्तसदने वासोऽस्तु नः श्रेयसे ।।

सूत उवाच -

वरनाम्नामधिपाय मे नमोऽस्तु
नमनं मेऽस्तु गिरीन्द्रजाब्जपादे ।
सुनतिर्मेऽस्तु सदैव विघ्नराजे
नमनं मेऽस्तु हृदैव षण्मुखाय ।। 8

यूयं मायादिमोहप्रशमितदुरिता भस्मरुद्राक्षभाजः
शान्ता दान्ता भवन्तः सुकृतकृतिवराः सत्रिणोमित्रपात्राः।
श्रीमल्लिङ्गसमर्चनार्जितयशस्तुङ्गाङ्गसङ्गाश्च ये
भूयात्पातकभङ्गमेव नियतं शम्भोःस्फुलिङ्गेक्षणात् ।। 9

ऋषय ऊचुः -

धन्यो मान्योऽसि कोऽन्यस्तवसदृशगुणं नान्यमीक्षामहेऽद्य
वैद्यं वेदपदार्थबोधनरतं संसाररुङ्नाशकम् ।
त्वामेवात्मगुणप्रधानमधुना शम्भोः कथावाचकं
संसाराम्बुधितारकं हरकृपापात्रं सदा नोनुमः ।। 10

को वा परं शिवरहस्यमधु प्रकृष्टं
निष्ठावताऽद्य सुहृदा शिपिविष्टमिष्टम् ।
वेत्तुं च धर्ममथवा किमु वक्तुमेवं
शिष्टो वरिष्ठमहिमा भगवांस्त्वमेव ।। 11

नन्दीशविघ्नेशसमोऽसि षण्मुख
प्रभावतुल्यप्रतिभस्त्वमेव ।
त्वं नो गुरुः शिवकथा मृत पानपीना
हीनातिदीनवदना न भवाम भावाः ।। 12

सत्रं पवित्रमधुना सततं त्रिणेत्र-
चारित्रपात्रमधु च प्रपिबाम श्रोत्रैः ।
चित्रं विचित्रपदयन्त्रितमन्त्रसार-
सारार्थसिन्धुसुरहस्यममुत्र पुत्र्यम् ।। 13

तत्र त्रिणेत्रसुपवित्रकटाक्षमात्र-
सन्त्रस्तपातक भरास्तपसेऽर्चनाय ।
देहान्त एव हि भवेदविमुक्तवासः
पुष्पैः पचेलिमफलैर्घवलाद्रिवासः ।। 14

तत्रैव शङ्करगणाः प्रभवाम सामि-
सोम प्रकामशिरसः सितभस्मभूषाः ।
योषार्धगात्रकमनीयलसज्जटाल (?)
लोलालकाः शिवपदाम्बुजसेवकाश्च ।। 15

किन्नो ब्रह्मपदेषु वैष्णवयशःस्फीते पदे वा पदं
प्राप्ते चापि हि किं महेन्द्रभवने दिक्पालकानां पदे ।

तत्रत्यातुलशङ्कराचलमहाकैलासवासाधिकं
नाप्नोत्येव फलं सुमुक्तिषु वरं वाञ्छापि निःश्रेयसी ।। 16

कैलासमौलितरवः पशवोऽल्पकीटा
नित्याः शिवस्य कृपया खलु सर्वदापि ।
लोक्याः पुनर्दिविषदः प्रतिकल्पनाशा
ब्रह्मेन्द्र विष्णुमरुतो वसवोऽर्करुद्राः ।। 17

कैलासवासाय शिवप्रसादतः
काशीनिवासाय लभेम पुण्यैः ।
यज्ञैरथाज्ञानविनष्टमानसा
व्रजाम शीघ्रं खलु मुक्तिसिध्यै ।। 18

कैवल्यवल्लीमिव तां पुरीं तदा
मुदा पुरारेर्विविशुः प्रहृष्टाः ।
भिल्लाकृतीशानशरासनप्रभा-
स्ते वालखिल्याः शिथिलाघसङ्घाः ।। 19

ऐक्षन्त चादर्शतलस्थितेव(?) तां
गङ्गां द्विजास्तुङ्गतरङ्गभङ्गाम् ।
उत्तुङ्गलिङ्गावलिसौधकुम्भा-
मम्भोधराङ्कप्रतिभां च कान्ताम् ।। 20

कैलासशैलमणिमौलिग दिव्यपाली-
व्यालीव तुङ्गावलि सौधकेली (?)
सस्नुस्समस्ताघहरे प्रशस्तां
दिव्यां च तां श्रीमणिकर्णिकां द्विजाः ।। 21

सन्तर्प्य देवर्षिपितॄंस्तदा मुदा
गङ्गातटे ते कृतभस्मभूषाः ।
पुण्ड्राक्षमाला मुनयो ह्युमेशं
समार्चयंस्ते किल बिल्वपत्रैः ।। 22

गृहस्था वनस्थास्तथान्ये च धन्या
द्विजाः शान्तसन्यासिनोऽप्येकदण्डाः ।
जटाला निटालेक्षणाः सक्तचित्ता
विरक्तास्तथा ब्रह्मचर्येषु रक्ताः ।। 23

तथाऽनग्नयः साग्नयो भग्नमाना
श्रुते श्रद्धया श्रद्दधानाः पितॄंस्ते ।
तथा हव्यकव्यैः समभ्यर्च्य लेखा
मुदा ते गृहं चक्रमुः प्रक्रमैस्ते ।। 24

विश्वेशभैरवषडाननदुण्ढिराज-
मुख्यान्प्रणेमुरथ मातरमन्नपूर्णाम् ।
श्रीदण्डपाणिं च तथा प्रणम्य
सम्पूज्य पूजादिभरैस्स्तुतीभिः ।। 25

अलाबुदारुवेणुशृङ्ग धातुकुम्भसङ्गत-
प्रकृष्टगाङ्गजाम्भसा नमोऽन्तरुद्रसूक्ततः ।
प्रकृष्टपञ्चपापहृत्सुपञ्चवर्णमन्त्रतः
प्रसिच्य लिङ्गमैश्वरं सुबिल्वपल्लवैः सुमैः ।। 26

सुगन्धिगन्धसारतस्तथैव धूपदीपतो
निवेद्य चाम्बुभिः फलैर्वरान्नभक्ष्यभोज्यकैः ।

प्रसाद्य च प्रभुं गिरीन्द्रकन्यकाधिनायकं
महर्षयस्तदा प्रसन्नमानसाः प्रतुष्टुवुः ।। 27

ऋषयः ऊचुः -

विश्वेश्वरोऽयं मदनान्तकोऽयं
पुरान्तकोऽयं हि भवान्तकोऽयम् ।
सुरासुरौघानतपादपद्म-
सद्मायितो नोऽस्तु मुदे सदेति ।। 28

एष ब्रह्मैष रुद्रः श्रुतिरतुलबलाद्विश्रुतं ते पदाब्जं
निर्वक्ति प्रमथाधिनाथ भगवन् श्रीविश्वनाथ प्रभो ।
कोशातीतमनन्तमव्ययमजं काश्यां प्रकाशं परं
वेदावेद्यपदं विशोकमजरं पश्येम लिङ्गं हि ते ।।

मोदोन्मदाश्चागमवेदवाचां
निवृत्तिभावा मनसा सहैव ते ।
भजाम लिङ्गस्थितमप्यलिङ्ग-
मुमासहायं तमसः परं त्वाम् ।। 30

देव्यन्नपूर्णे कृपया सुपूर्णे
तूर्णं हृदाकाशगते त्वपर्णे ।
किं वर्णयामस्तव सुप्रभावं
भवार्णवान्तः पतितान् समुद्धर ।। 31

भजे विशालाक्षि पदाम्बुजं ते
प्रदेहि भिक्षां निखिलेषु साक्षिणी ।
नैःश्रेयसं नः श्रमकष्टनाशिनी
भवाम युक्ताश्च कटाक्षतस्तव ।। 32

श्रीदुण्ढिराज शरणागत काशिवासि-
विघ्नौघपातकततिं परिनिघ्नयाशु ।
गन्धाम्बुपुष्पवरमोदकतः प्रपूज्य
नन्दामहे तव पदाम्बुज भृङ्गभावाः ।। 33

श्रीभैरवारवभर श्रवणान्तयुग्म-
तिग्मैकपातक भरैरभिपूरिता ये ।
कालाष्टमीषु परिपूज्य तवाब्जपादं
विप्रा वसेम नियतं पशुपाशमुक्त्यै ।। 34

श्रीदण्डपाणिचरणस्मरणानुरक्तान्
मुक्तान् करोति नियतानथ शम्भुभक्तान् ।
तस्मात्तवार्चनविधौ खलु जागरूकाः
विप्रा वसेम नियता हृदयैर्विशोकाः ।। 35

नाकर्णि यैस्तव कथा मणिकर्णिके तै-
निर्णीयते यमगतीषु सुदुःखवार्ता ।
त्वत्तीर्थमज्जनवतां नहि जन्म पुंसां
मुक्तिं ददासि परमां शिवभक्तिमिष्टाम् ।। 36

यो ज्ञानवापीं च सकृद्विगाह्य
मोदात्कृतं पापमपाकरोति ।
पापीयसीं नैव गतिं प्रयाति
वातापिभक्षप्रतिमो भवेत्सः ।। 37

एवं स्तुत्वा च नत्वा प्रतिदिनमथ ते विप्रवर्याः ससूता
देवान्तर्गृहमेत्य तत्र च तपश्चक्रुर्मुदा तत्र वै ।

तन्मुक्तिप्रदमण्टपेऽत्र नियतं स्थित्वैव चक्रुः कथाः
काशीवासनिवासहृष्टमनसः शिष्टाः सदाचारतः ।।38

केचिद्विश्वेशभक्तिस्तुतिनतिनियता भान्ति मुक्ताश्च सिद्धा
केचिद्भूतेशनिष्ठा भवभयहरणोद्युक्तचित्ता विरागाः ।
केदारार्चनतत्परा यतिवरा श्रीदारकेशार्चकाः
केचित्ते शिवभक्तिसारसरसास्तत्राविमुक्तेश्वरम् ।। 39

श्रीमत्त्रिलोचनपरा नियतं प्रदोषे
सन्न्यस्तदोषनिकराः पशुपेशनिष्ठाः ।
मुक्त्यै वसन्ति नियताः फलपर्णवात-
तीर्थाम्बुपारणपराश्च विधूतसङ्गाः ।। 40

केचिद्रुद्रजपादराः सितमहाभस्मत्रिपुण्ड्रादराः
रुद्राक्षोरुसरा महेश्वरमहालिङ्गानि गङ्गाम्भसा ।
सम्पूज्यामलबिल्वपल्लवसुमैः सम्पूज्य तस्थुस्तदा
केचित्स्थाणुवदास्थिता यतिवराः श्रीतारसञ्जापिनः ।। 41

कास्यां प्रविष्टा यदि ते विशिष्टा
अन्यत्र दिष्टान्तगताश्च ते पुनः ।
न याम्यलोकं प्रविशन्ति सौम्या
ते मुक्तिमण्टपमवाप्य मखादिधर्मैः ।। 42

संसिद्धिशुद्धमनसः शिपिविष्टनिष्ठा
तेपुश्च जेपुरनिशं प्रणवं च रुद्रम् ।
पञ्चाक्षरं पावनमेव ते द्विजाः
शिवैकभावा भवभारहीनाः ।। 43

ऊचुस्तदा प्राञ्जलयोऽथ सूतं
काशीरहस्यागमतत्वसारम् ।
वासाय धर्मेण शिवभावनोद्यता
उद्यन्तमादित्यमुपासितुं गजाः ।। 44

।। इति श्रीशिवरहस्ये द्वादशाम्शो
अविमुक्तागमनं नाम
एकोनचत्वारिंशोऽध्यायः ।।



## ।। चत्वारिंशोऽध्यायः ।।

ऋषय ऊचुः -

श्रीविश्वनाथवरसन्निधिगाः समग्राः
सर्वेऽद्य पापानिकरैरपि विप्रमुक्ताः ।
मुक्ता विमुक्तसदने मदनान्तकार्चा
पूजावताऽद्य सुहृदा वद वासधर्मान् ।। 1

सूत उवाच -

क्षेत्रेष्वन्यत्र शम्भोर्यमशमनियमैर्भस्मरुद्राक्षभाजां
लिङ्गार्चासु सुमुद्यतैः शिवकथासारादरं शाम्भवैः ।
तत्तत्क्षेत्रनिवाससम्भवफलैः सम्प्राप्यतेऽयं सुराः
काशीनाशितपापशैलनिकरा विश्वेश्वरस्याज्ञया ।। 2

हे विश्वनाथ ममनाथ सनाथ पाहि
हे मन्मथान्तक विभो परिपाहि शम्भो ।
आनन्दकाननिवास पिनाकपाणे
वाणीशवन्द्यमहिमन् भगवन्नमस्ते ।। 3

हे सङ्गमेश रमणेश्वर शेषभूष
पाहीश मामकधिया परिपाहि दीनान् ।। 4

क्षयद्वीर काकोदरानद्धहार-
स्फुरत्स्फार कर्पूरगौर प्रसीद ।
विभो धीर विश्वेश भूतेश शम्भो
महाघोरवैश्वानराक्ष प्रसीद ।। 5

श्रीसङ्गमेश तव लिङ्गसमर्चनेन
साङ्गाभिषङ्गतनवोऽप्यखिलाघभङ्गाः ।
गङ्गाम्भसाऽऽप्लुतशरीरसमस्तसङ्गा
नाङ्गा भवेमहि पुनस्तव पादसङ्गाः ।। 6

श्रीमत्त्रिलोचन सनातन देहहीन
पञ्चाननावन हुताशरवीन्दुनेत्र ।
नेत्राग्निदग्धमदनाङ्ग हर प्रसीद
सिद्धाभिनन्द्यमहिमन् भगवन्नमोऽस्तु ।। 7

विप्रानथ प्राप्तसुखान् कुरुष्व
क्षिप्रं त्वमद्यैव दयावता दृशा (?) 8

केदारेश्वर हारभास्वरमहाकाकोदराकल्पका-
नल्पाकल्प *भवत्यथोजजमहामुञ्जादिषडाङ्गकम् (?)
नेत्राहस्कर तस्करान्तक हर स्वामिन् प्रसीदाशु नः ।। ? 9

शम्भो विभो पशुपतीश्वर कालकाल
हे व्यालमाल गरलाशन हस्तशूल ।
दक्षैकपक्षे सुपक्षमहोक्षवाह (?)
त्र्यक्षाधुना रक्ष कटाक्षकोऽद्य (?) ।। 10

संसाराम्बुधितारकान्तकहरस्वामिन् मृडानीपते
मारापारशरादिभिन्नहृदयान् संवीक्ष्य विद्याहरः (?)
स त्वं तारकनामकेश्वर विभो पाहि प्रपन्नान् मुनीन्
अस्मानुद्धर धीरवीर भगवन् संहारयाघं हि नः ।। 11

---

* ईश्वरोवेत्ति - भावार्थम् । पादत्रयात्मकं पद्यम् ।

हेमध्यमेश करुणाकर शूलपाणे
पाहीश फाणित सुमेध्यवचोऽन्तरङ्ग ।
अध्येम विद्येव तवोरुनाम
यन्मुक्ति सिध्यै तव सुप्रसादतः (?) ।। 12

कदा न मुक्तं त्वविमुक्तमेतत्
भुक्तेषु मुक्तिप्रथनाथ त्वया (?)
देवाविमुक्तेश्वरमुक्तिभाग्यं
वैराग्यमप्यत्र ददस्व नः सदा ।। 13

हे स्वर्णवर्णभगवन् परिपूर्ण शम्भो
चक्षुः श्रवोत्कीर्णसुकर्ण शम्भो ।
हे अन्नपूर्णापतये नमस्ते
तत्रेत्थमेव नियतं प्रवदन्ति शैवाः ।। 14

हे वीरेश महेश शङ्कर विभो पाहीश विश्वाधिक
शश्वन्नश्वर विश्वपालक विभो पाहि प्रसीदाधुना ।। 15

हे वृद्धकाल करुणावरुणालयाद्य
पाहि प्रसीद परमेशअवर कालकाल ।
हे कृत्तिवास जनवास महेश्वराद्य
हे श्रीनिवासनयनार्चितपादपद्म ।। 16

हे सङ्गमेश दुरितौघविभङ्गकेश
श्रीतारकेश शशिमौलि कलाललाम ।। 17

हे सिद्धेश महेश पाहि दयया विद्धीश दीनं हिमाम् ।। 18

श्रीमत्त्रिलोचन जनावन पाहि शम्भो
कुम्भोद्भवादिमुनिवन्द्यपदाब्जयुग्म ।
हे मध्यमेश परिपाहि सुमेध्य शम्भो
केदारनायक विभो परिपाहि शम्भो ।। 19

पुण्याविमुक्तेश्वर भक्तिमुक्तिं
शक्तिं प्रदेहि तव लिङ्गसमर्चनाय ।
पाहीति ये प्रणतिपूर्वकमादरेण
तत्राविमुक्तसदने प्रवदन्ति शैवाः ।। 20

ज्ञानेश विज्ञानद कालकाल
यज्ञेश पाहि दयया परिपाहि शम्भो ।। 21

ओङ्कारेश महेश शाश्वत विभो पाहि प्रसीदाधुना
हे शम्भो मणिकर्णिकेश भगवन् रामेश लक्ष्मीश्वर ।
दक्षेशान दयानिधान भगवन् श्रीभारभूतेश्वर
व्यासेशान गराशनेश महते चन्द्रेश पाह्यद्य माम् ।। 22

ब्रह्मेशान जगद्विधानमहिमन् पाहि प्रसीदाधुना ।। 23

हे ढुण्ढिराज शरणागतविघ्ननाश
वेतण्डतुण्ड भगवन्नव वक्रतुण्ड ।
हे मङ्गलागौरि ममाद्य मङ्गलं
दिशाधुना पापमपाकुरुष्व ।। 24

हे सङ्कटानि मम नाशय काशि(आशु) विघ्नं
निर्वापयाद्य गणना दलयाशु(?)देवि ।

दुष्कर्मणो भगवति त्रिपुरेशि जालं
छिन्धीति तत्र नियमेन वदन्ति शैवाः ।। 25

अक्षय्यभक्ष्यनिकरैः मम देहि भिक्षां
काशीनिवासजनुषां वरपात्रहस्ते ।
दर्वीकरेण सुरसायनमुक्तिरूप-
माहारमेव हि ददस्व किमन्नसारैः ।। 26

वन्दे विशालाक्षि महोक्षवाह-
प्रियाङ्गने पाहि दयाकटाक्षैः ।
हे भैरवामरवरप्रवरोरुघोष
काशीनिवासजनताघहर प्रसीद ।। 27

माषापूपभरैरपारविभवैः पुष्पोत्करैस्त्वां गुडैः
सम्पूज्याप्यसिताष्टमीषु नियता निर्विघ्नतः पाहि नः ।। 28

हे षोडशप्रवरविघ्नप पादपद्मं
सम्पूज्य मोदकभरं विनिवेद्य लड्डुम् ।
पुष्पैश्च सिन्दूरसुगण्डमण्डनैः
काश्यां च निर्विघ्नकरा भवन्ति ।। 29

ये पञ्चगङ्गातटगाश्च कार्तिके
वैशाखमासे मणिकर्णिमज्जनाः ।
ते सज्जनाः काशिनिवासशीला
आरोग्य वैराग्य सुभाग्ययुक्ताः ।। 30

ये चन्द्रकूपपरिमज्जनधूतपापाः
पापत्रयोपशमने ऋणमोचने च ।
ये वृद्धकालोदककूपपानाः
पुण्ये पिशाच हरवारि अघापहारि ।। (?) 31

ये सन्निधौ पशुपतीश्वरकुण्डवारि
पापप्रचण्डहरणं शरणं प्रपन्नाः ।। 32

काश्यां ज्ञानोदपाना यमनियमधनाः पावनाः सावधानाः
विप्रा युक्ता नियुक्ता हरभजनरताः स्नानपानैर्विशुद्धाः ।
द्वादश्यामिन्दुवारे प्रपिबति जनता दुःखतान्ता कृतान्ता-
दन्यत्रापि मृता न पाति दुरितं ह्रल्लिङ्गमिष्टं भवेत् ।।33

घण्टाकर्णसरोवरोदकपराः सर्वाघहारादरा
जैगीषव्य गुहाविलोकनरतास्ते वै महापापहाः ।
पुण्यान्तर्गृहयात्रिणोऽत्र नियतं मुक्ताश्च भक्ता हि ते ।। 34

उमाधवार्चा निरतं च माधवं
प्रसाद्य वासाय वसन्ति साधवः ।। 35

पञ्चक्रोशपरा भवन्ति नियताः पक्षेऽपि मासेऽपि वा
काश्यन्तर्गृहतत्पराघनिचयो नश्येच्चतत्प्रक्रमैः ।
न क्रामेत तनूषु पातकभरं नो वा गदः सङ्क्रमे
नैवाक्रोशपरा भवन्ति गणपास्तस्यत्रसंवासिनः ? ।। 36

एवं ये निवसन्ति सन्ततमुमाकान्तार्चकाः शाङ्कराः
भस्माक्षामलपुण्ड्रफालजटिलाः कार्पण्यलौल्योज्झिताः ।

पुण्येषु प्रतिपर्व शर्वसुमहायात्रारतास्ते परं
मुक्ता एव भवन्ति तत्र सदने विश्वेश्वरालोकिनः ।।37

मध्याष्टमीप्रथितसोम समानधाम
सीमाललामपरिपूजनकृत्स धन्यः ।
ये सोमवासरपरा अपि नक्तभुक्त-
शक्ताश्च भक्तिपरमाश्च भवन्ति युक्ताः ।। 38

ये वा सदोषे प्रथिते प्रदोषे
लिङ्गोत्तमेऽनङ्गपतङ्गभङ्गम् ।
श्रीमत्त्रिलोचनमहोत्तमलिङ्गमत्र-
सम्पूज्य पातकभरैः प्रभवन्ति मुक्ताः ।। 39

भूतासु भूतपतिमेव यजेत चात्र
भस्मत्रिपुण्ड्रकवराक्षधरो नरोऽत्र ।
मुक्तस्त्रिणेत्रकृपया वरपञ्चवर्ण-
रुद्रादि मन्त्रजपकृत्स भवेद्विमुक्तः ।। 40

योऽन्नानि शाम्भववरे प्रददाति पुण्य-
लिङ्गप्रतिष्ठां च मुदा करोति ।
दानानि चैवात्र ददाति पात्रे
तस्याघसङ्घमखिलं निहतं हि नित्यम् ।। 41

एवं निवासरसिकस्य हरोऽन्तकाले
तारं सपञ्चार्णमहो ददाति ।
तेनैव निस्तीर्णभवा भवन्ति
भावाः प्रभावाच्छशिखण्डमौलेः ।। 42

गङ्गाधराः शशिधरा वरसर्पहारा
हारा विहारपरमा रजताद्र्य गाराः ।
ते वै भवन्ति रुचिरा गरहारधीरा
माराङ्गसम्भवमहासितभस्मधाराः ।। 43

ये ये कैलासमौलौ निवसनहृदया यान्त्यहो तेऽद्यकाशी-
वात्या यत्र पवित्रशीलनिरता दुःखाघसङ्घोज्झिताः ।
विश्वेशस्य कृपाभरैकसुदृशो मूढास्तथा पण्डिता-
स्तोत्रैवान्तिमदेहपातनमिदं शम्भोः परं भूषणम् ।। 44

त्र्यक्षप्रसादोन्नतपापभक्षं
संवीक्ष्य ये साक्षिविनायकं च ।
ये वात्र काश्यां निवसन्त्यधर्मतो
न शर्म तेषां भवते(भविता)कदापि ।। 45

ते भैरवेशानल रूक्षवीक्षणैः
भस्मावशेषाः प्रभवन्ति दग्धाः ।
येऽत्राविमुक्ते च परान्त भोजना
दुर्भोजनास्ते गरलाशनैर्मृताः ।। 46

हुताशनं सन्ददतो गृहेषु
दुर्द्यूतदुर्देवनरोदने रताः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 47

येऽत्रानन्दवने द्विजातिहननैः पानैश्च सन्निन्दनैः
शैवासूयादिमायामयधनहृदया ये रताश्चान्यदारे(?)
ते भैरवेशानलरूक्षवीक्षणैभस्मावशेषाः प्रभवन्ति दग्धाः ।।48

येकाश्या वसतां क्रुधाऽहितमहो कुर्वन्ति वैरं यतः
दण्ड्यान् याचकपाचकान् प्रतिरुषा सन्तोहसन्त्यन्वहम् (?)
ते भैरवेशानलरूक्षवीक्षणैभस्मावशेषाः प्रभवन्ति दग्धाः ।।49

ये विश्वनाथ नतिदर्शनतो विहीना
वीरेश यज्ञेश विनिन्दने रताः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 50

महाश्मशानेऽत्र वसन्त्यसाधवो
ये माधवार्चाविमुखा हि दुर्मुखाः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 51

मूकान्धपङ्गुबधिरानथ रोगखिन्नान्
हीनान् धनैर्वापि द्विषन्ति येऽति ते ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 52

ये चान्नपूर्णानतिदर्शनोज्झिता
मातापितृणां गुरुणां (?) विनिनिन्दकाः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 53

ये चान्तर्गृहविभ्रमे भ्रमजुषःशम्भोर्धनाहारिणः
स्तेना ये निरपत्रपा कुमतयो विक्रीणका ये गवाम् ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 54

येऽत्रैव गङ्गाम्भसि नैव मज्जनात्
ते दुर्जना ये मणिकर्णिनिन्दकाः ।
येऽत्रैव साक्षाद्वरदुण्ढिनं जना
नार्चन्ति वा हीननराश्च पामराः ।।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 55

येऽत्रैव सत्रैर्न यजन्त्यदानिनो
ये मानिनो भिक्षुषु भैक्ष्यवर्जिताः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 56

येऽत्रैव निवसन्ति दण्ड्याः
पानीयशालाप्रतिरोधका गवाम् ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 57

ये दण्डपाणिपदपङ्कजदर्शनेन
हीनाश्च केदारसमर्चनोज्झिताः ।
ते भैरवेशानलरूक्षवीक्षणै-
भस्मावशेषाः प्रभवन्ति दग्धाः ।। 58

चतुर्दश्यां काश्यां शिवनतिविमुखान्नक्तशक्तानभक्तान्
नो मुक्तान् प्रभवन्ति पापजनुषो ये मानुषाः पापिनः ।(?)
ये पर्वण्यतिदोषभाषणपरा ये शर्वयात्रोज्झिताः
ते सर्वेऽपि महोरुभैरवमहादंष्ट्राग्रतश्चर्विताः ।। 59

येऽत्र त्रिपुण्ड्ररहिता विधृतोर्ध्वपुण्ड्रा
रुद्राक्षहारवलयोज्झितसर्वगात्राः ।
अन्यार्थरुद्रजपिनोऽपि च यन्त्रमन्त्र-
विभ्रामतःस्थितिपरा वरभैरवाशाः ।। 60

पञ्चाक्षरं वेदगणं च शूद्रे
ददाति योऽत्रैव तिलस्य होमकृत् ।
अर्थार्थमेवात्र वसन्त्यसाधवः
उमाधवोत्तुङ्गसुलिङ्गभङ्गकाः ।। 61

प्रासादप्रकरं महेशसदनं विप्रस्य वा भङ्गकृत्
योऽत्रैवातिकृतघ्नतस्करवरो हारेषु निन्दाकरः ।
पुण्यघ्नो गरदः सुरासवरतः स्त्रीबालगोघ्नस्तथा
सर्वे ते प्रभवन्ति भैरवकशाघातोग्रखिन्ना नराः ।। 62

ये वा पान्थविरोधकाश्च विहितैर्धर्मैर्विहीना नरा
घोरास्ते यमकिङ्करैरपि सदा दण्डैश्च सन्ताडिताः ।
कः सोढा वरभैरवेश्वरकशाघातस्य भीताः परं
निष्पापास्तु भवन्ति रुद्रगणपा नो निष्कृताङ्गाःपरे ।। 63

किञ्चात्रैव रहस्यमन्तरगृहे शम्भोर्नमूत्रं शकृत्
निष्ठीवेन्न च किल्बिषी च न भवेन्नैवापि दुष्कर्मकृत् ।
तं केनापि निवार्य पातकिवरं नो निष्कृतं तद्भवेत्।।(?)64

तस्मादथान्तरगृहमध्यसंस्थो
न वै गृहस्थो न यतिर्वसेन्नरः ।। 65

**सूत उवाच -**

ईशाख्यया शशिधरेण मुदा शिवायै
प्रोक्तोऽम्श एष मथिताग्निशिखोपमानः।
पापौघतूलदहनो गहनार्थपद्यः
सद्योविमुक्तिकृदसङ्कृतिजन्मदायी ।। 66

ते सत्रिणस्त्रिणयनार्चनजातपुण्यैः
सत्पुत्रिणोऽत्र निवसन्ति कृताग्निहोत्राः ।
वन्याश्च सन्न्यासिवाराश्च सूता-
स्ते वर्णिनो विविशुरीश्वरमेव चान्ते ।। 67

शिवपादारविन्दं यच्छ्रियं च श्रीपतिं विधिम्
उत्पादयति नित्यं वै तस्मै नित्यं नमोनमः ।
अस्तु स्वस्ति समस्तवस्तुषु चिरं भाग्यं भवेन्निस्तुलं
निस्तोकप्रभवास्तु कर्मगतयो व्यत्यस्तमार्गा न वै ।।

आस्तां वास्तवमेव लोकमखिलं नास्तं हि सङ्गच्छतात्
शस्तं हस्तगतं भवेत्तु निखिलं कस्तं भजेन्नो हरम् ।
हस्तन्यस्त समस्त लोक वलयं विध्वस्तमस्तं विधेः
वस्तु व्यस्तमखक्रियादिविधुरं सन्न्यस्तदक्षासुहृत् ।। 69

शस्तोन्मत्तगजेन्द्रचर्मवसनं कस्स्तोतुमीहेन्नरः
वित्रस्ताखिललोकजालमगजाकान्तं भजे केवलम् ।
यावत्पूषादिशेषः क्षितिरियमखिलाः सागरा लोकपाला-
श्चन्द्रेन्द्रानलवायवो विद्युविधीशानादयः पर्वताः ।। 70

नद्यः सद्योद्यहृद्या यमनियमपरा विप्रजाताः सुविद्या
विद्योतन्तां गृहस्थाः शिवसुदृशकृपालाभमात्राः पवित्राः ।
सर्वः शर्वप्रसादाद्भुवि विहितयशो(?)ऽखर्वगर्वैभक्त्या
अर्वोद्यन्मुखसन्मखादि करणै रक्षन्तु गां क्षत्रियाः ।। 71

विप्राः सत्रादिशीला यमनियमहिता वश्यवैश्या भवन्तु
शूद्रा विद्राविदुःखाः प्रतिदिशममला पूर्व एवं सुशीलाः ।।72

अनर्गलं मङ्गलमस्तु नित्यं
यन्मङ्गलानायकसुप्रसादतः ।
स्वस्ति प्रजाभ्यो द्विपदां चतुष्पदां
सदाविपद्वारणमस्तु मह्याम् ।। 73

।। इति श्रीशिवरहस्ये द्वादशाम्शे
सूतमुनिसंवादोनाम
चत्वारिंशोऽध्यायः ।।

।। शिवमस्तु ।।

।। शिवरहस्यं सम्पूर्णम् ।।



# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past. are the great treasures. solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course. as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore. **Rajah Serfoji,** has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous **"Sarasvati Mahal Library".** It is open to you to share the honour of Serfoji. in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
**Sarasvati Mahal Library,**
**Thanjavur.**

